॥श्रीगणेशायनमः॥ श्रीसरस्वत्यैनमः॥ श्रीगुरुभ्योनमः॥लक्ष्मीकान्तंनमस्कृत्ययथामतिविरच्यते॥वासि
ष्ठसारविवृत्तिःपरोपकृतयेमया॥१॥वसिष्ठेनयतीन्द्रेणोपदिष्टाद्राघवंप्रति॥सारमुद्धृत्यवाल्मीकिर्ब्रह्मविद्या
महार्णवात्॥२॥तत्रादौवसिष्ठसाराख्यंग्रंथमारिप्सुस्तन्मतिपाद्यइष्टदेवतानतिरूपंमङ्गलमाचरति॥दिक्का
लेति॥एवंविधायशांतायगुणातीतायतेजसेब्रह्मरूपायनमः॥तेजःशब्देनात्रब्रह्मैवनभौतिकंतेजस्तस्य
वक्ष्यमाणलक्षणानुपपत्तेः॥किंभूतायतेजसेदिक्कालादिभिरनवच्छिन्नानंदरूपयापरिच्छिन्नाअनंताअवि

॥श्रीगणेशायनमः॥दिक्कालाद्यनवच्छिन्नानंतचिन्मात्रमूर्तये स्वानुभूत्यैकमानायनमः शांता
यतेजसे १ अहंबद्धोविमुक्तःस्यामितियस्यास्तिनिश्चयः नात्यंतमज्ञोनोतज्ज्ञःसोस्मिञ्छास्त्रेधिका
रवान्॥२॥

नाशिनीचिन्मात्रज्ञानरूपामूर्तिःस्वरूपंयस्यतस्मै॥पुनःस्वानुभूतिःस्वानुभवएवैकंमानंप्रमाणंयत्र
तस्मैअनुभवैकवेद्याय॥अवचनेनप्रोवाचेतिश्रुतेः १ एवंमंगलंविधायात्रशास्त्रेअधिकारिणंदर्शयति।अहंबद्ध
इति।रागद्वेषादिनाबद्धोहंकथंमुक्तोभवेयंइतियस्यनिश्चयोस्तिअतएवनात्यंतंअज्ञोमूर्खोनापितज्ज्ञःपंडितः॥सोत्र
शास्त्रेऽधिकारी॥ब्रह्मज्ञस्यतुज्ञाततत्त्वादेवनाधिकारः॥मूर्खस्यउपदेशवैयर्थ्यादेवाधिकाराभावः॥तस्मात्किंचि
द्ज्ञोविवेकीअधिकारीश्रवणादेरित्यर्थः॥

प्र॰ १

राम १

एवमधिकारिणं निरूप्य सद्गुरुसेवादिकं ब्रह्मज्ञानसाधनं निरूपयति॥ यावदिति॥ यावत्परमेश्वरात्साक्षादनुग्रहः न जायते तावत्कश्चिदपि पुमान् सद्गुरुं सच्छास्त्रं नाभ्यसेत्॥ गुरुसेवा सच्छास्त्राभ्यासश्च परमेश्वरानुग्रहादेव भवतीत्यर्थः॥ ३॥ ननु गुरुसेवया किं स्यादित्यत आह॥ महानुभावेति॥ महानुभावस्य ब्रह्मज्ञस्य गुरोः संपर्कात्सेवया संसारसमुद्रतरणे युक्तिः उपायः प्राप्यते॥ नाविकात् यथा समुद्रतरणे दृढा तारणसमर्था नौः प्राप्यते॥ गुरूपदिष्टमार्गेण सं

यावन्नानुग्रहः साक्षाज्जायते परमेश्वरात्। तावन्न सद्गुरुं कश्चित्सच्छास्त्रं वापि नो लभेत् ३ महानुभावसंपर्कात्संसारार्णवलंघने। युक्तिः संप्राप्यते रामदृढा नौरिव नाविकात् ४ संसारदीर्घरोगस्य सुविचारो महौषधं। कोहं कस्य च संसारो विवेकेन विलीयते ५ यस्मिन्देशे हि तत्त्वज्ञो नास्ति सज्जनपादपः। सफलः शीतलच्छायो न तत्र दिवसं वसेत्। ६

॥ सारस्तीर्यत इत्यर्थः॥ ४॥ संसारेति॥ अहं कः कस्य वा संसारः इति यो विचारः संसाररूपदीर्घरोगस्य महौषधं॥ यतो विवेकेनैव संसारो विलीयते नश्यति। यथौषधेन रोगशान्तिस्तथा विचारेण संसारशान्तिरिति भावः॥ ५॥ यस्मिन्निति॥ यस्मिन्देशे एवंविधः सज्जनपादपः सत्पुरुषवृक्षो नास्ति तत्र दिवसमपि नैव वसेत्॥ न दिनं स्थातव्यं॥ तत्त्वज्ञभुजमुना॥ कीदृशः सज्जनवृक्षः तत्त्वज्ञः तत्त्वं पदार्थौ विवेकेन जानाति॥

यो·वा· तत्वंब्रह्मस्वरूपंजानातीतिवा॥सफलःफलेनब्रह्मज्ञानोपायेनसहितः॥शीतलाआनंदकारिणीछायाकांतिर्य प्र·
सा· स्ययथातत्वंस्वस्वंजानातीतिवा॥यत्रईदृशःफलसहितोघनछायोवृक्षस्तत्वज्ञानीवानास्तितत्रदिनेनवसेदिति १
२ ध्वनिः॥६॥सद्येति॥सत्पुरुषाययद्यपिउपदेशंनददाति॥तथापिअभिगंतव्याःसेव्याःसदा॥यतस्तेषांयाःस्वेच्छाकथा
स्ताएवोपदेशाः॥सतांब्रह्मकथयैवकालनिर्गमनादित्यर्थः॥७॥शून्यमिति॥सत्पुरुषसंगात्शून्यंपूर्णभावंप्राप्नोति

सदासंतोभिगंतव्यायद्यप्युपदिशंतिन याहिस्वैरकथास्तेषामुपदेशाभवंतिताः ७ शून्यमापू
र्णतामेतिमृत्युरप्यमृतायते आपत्संपदिवाभातिविद्वज्जनसमागमात् ८ ज्ञानिनामपिचि
त्तंचेत्केवलात्मसुखोदितं सत्वाःसंसारदुःखार्ताःकंयांतिशरणंतदा ९ तज्ज्ञानंसचशास्त्रार्थ
स्तद्विज्ञानमखंडितं सच्छिष्यायविरक्तायसाधोर्यदुपदिश्यते॥१०॥ मृत्युरप्यमृतोभवति।आपत्दुः

खमपिसुखरूपंभवति।वस्तुतःशून्यमृत्युदुःखानांब्रह्मण्यभावादित्यर्थः८ ज्ञानिनःसर्वथादीनंशरणागतंदृष्ट्वोप राम
दिशंत्येवेत्याह।ज्ञानिनामपिचित्तंकेवलंआत्मसुखायैवोदितंचेत्तदासंसारदुःखव्याप्ताःप्राणिनःकंशरणंयांति २
।तस्मात्ज्ञानिनःपरोपकाररताभवंतीतिभावः९ किञ्चतज्ज्ञानमिति॥तदेवज्ञानंसएवशास्त्रार्थःतदेवाखंडितंवि

उपदेशेति हे राम गुरूपदेशक्रमस्तु मर्यादापालनमेव ॥ ब्रह्मज्ञानस्य अयमेवात्मा ब्रह्मेति महावाक्यार्थोपदे
शदृढीकरणस्य कारणं तु शिष्यप्रज्ञैव केवला नान्यदित्यर्थः ॥ शिष्यप्रज्ञानं विना उपदेशोऽनर्थक इत्यर्थः ॥ ११ ॥
तदेवाह ॥ न शास्त्रैः गुरुणापि कृत्वा परमेश्वरो द्रष्टुं शक्यते ॥ सत्वगुणस्थया निजबुद्ध्यैव स्वयमीश्वरो दृश्यते ॥
मननपरेणात्मा प्राप्य इत्यर्थः ॥ १२ ॥ सर्वापीति ॥ अन्या सर्वा अध्ययनादिकलाः प्राणिनः अभ्यासाभावेन नाश

उपदेशक्रमो राम व्यवस्थामात्रपालनं । ज्ञप्तेस्तु कारणं शुद्धं शिष्यप्रज्ञैव केवला ११ न शास्त्रैर्नापि
गुरुणा दृश्यते परमेश्वरः । दृश्यते स्वात्मनैवात्मा स्वया सत्त्वस्थया धिया १२ सर्वाप्येवं कला जंतोर
नभ्यासेन नश्यति । इयं ज्ञानकला त्वंतासकृज्जाताभिवर्धते १३ स्वकंठेपि स्थितं वस्तु यथा न प्राप्य
ते भ्रमात् भ्रमांते प्राप्यते तद्वदात्मापि गुरुवाक्यतः १४ स्वस्वरूपमजानन्वै जनो यं दैववर्जितः ॥ १५

प्राप्नोति । ज्ञानलेशस्तु सकृदपि जातो वर्धत एव न नश्यति ॥ १३ ॥ स्वकंठ इति । यथा स्वकंठस्थितमपि वस्तु मण्यादिकं
भ्रांतिवशात् न प्राप्यते न ज्ञायते । न देषु च भ्रमनाशे यथा प्राप्यते । तद्वत् आत्मा स्वयमेव स्याद्वर्त्तमानोपि गुरुवाक्यत
एव प्राप्यते नान्यथा ॥ तस्माद्गुरुं शरणं यायादित्यर्थः ॥ १४ ॥ स्वेति ॥ अयं जनः भाग्यवर्जितः । यतः स्वस्वरूपं स्वकीयं

अजानन्सन् विषयेषु सुखं वेत्ति जानाति। परं तु परिपाके विषसंपृक्तान्नभोजनवत् दुःखमेवाप्नोतीत्यर्थः॥ १५॥
एवमात्मज्ञानसुखं कृत्वा वैराग्यार्थमाह॥ बुध्वेति। यो दुर्मतिः विषयाणां निरसतां ज्ञात्वापि तत्रैव भूयः पुनः स्नेहं
करोति नासौ पुरुषो गर्दभ एव। कस्मात्समानधर्मत्वात् गर्दभ एवेत्यर्थः। विषयलंपटत्वे गर्दभनरयोरभेद इति भा
वः॥१६॥ यत्किंचिदिति। कस्यापि पदार्थस्य संकल्पनान्नरो नरकमाप्नोति। संकल्पाभावे चाक्षयं मोक्षसुखमेवाप्नो

विषयेषु सुखं वेत्ति पश्चात्पाके विषान्नवत् १५ बुध्वाप्यनन्तवैरस्यं यः पदार्थेषु दुर्मतिः बध्ना
तिभावनां भूयो न नरो नासौ स गर्दभः १६ यत्किंचिदपि संकल्पान्नरो दुःखे निमज्जति. न किंचिद
पि संकल्पात्सुखमक्षयमश्नुते १७ यथा स्वप्ने मुहूर्ते स्यात्संवत्सरशतभ्रमः तथा मायाविला
सोयं जायते जाग्रति भ्रमः १८ योंतःशीतलया बुध्या रागद्वेषविमुक्तया साक्षीवत्पश्यतीदं हि
॥ जीवितं तस्य

ति॥१७॥ यथेति। मुहूर्तेकालमात्रे यथा शतसंवत्सरभ्रमो भवति। एवं जाग्रदवस्थायां अ
यं संसारो मायाविलासरूपो मरीचितोयवन्मिथ्याभूत इत्यर्थः॥१८॥ योंतरिति। यो नरो रागद्वेषरहितया अत एवां
तः शीतलया सानंदया बुध्या साक्षीवदिदं विश्वं विलोकयति तस्यैव जीवितं शोभते। रागद्वेषत्यागे मुक्तिरित्यर्थः॥

॥येनेति।हेयोपादेयंउज्झता।त्यजता।इदंमयाग्राह्यंइदंमयात्याज्यंइतिसंकल्पंत्यजतासतायेनबुद्धौप्रतिफलि
तंचैतन्यंब्रह्मसम्यक्ज्ञातं।तस्यजीवितंसफलं॥२०॥इदानींमरणनिमित्तशोकोनकार्यइत्याह॥हृदयेति।देह
नाशात्हृदयावच्छिन्नस्याकाशस्येवनाशोनभसोवच्छिन्नत्वंनश्यति।यथाघटनाशेघटावच्छेदएवनश्यति।न
त्वाकाशं॥तथाशरीरनाशेपिदेहसंबंधएवनष्टोनत्वात्मानश्यति॥अतोजनामूढाआत्मानष्टइत्युक्त्वा मिथ्यैवशो

येनसम्यक्परिज्ञातंहेयोपादेयमुज्झता चित्तस्यांतेस्थितंचित्तंजीवितंतस्यशोभते २० हृदया
काशमात्रस्यविनाशोदेहनाशतः व्यर्थभूतानिशोचंतिनष्टआत्मेतिशंकया २१ घटादिषुप्रणा
ष्टेषुयथाकाशमखंडितं तथादेहेषुनष्टेषुदेहीनित्यमलेपकः २२ नजायतेम्रियतेवाकोपिक्किं
५ चित्कदाचन जगद्विवर्त्तरूपेणकेवलंब्रह्मजृंभते २३ आकाशादपिविस्तीर्णःशुद्धःसूक्ष्मोऽव्य यःशिवः॥

कंकुर्वंति॥२१॥तदेवाह॥घटादिष्विति।घटादिपदार्थेषुनष्टेषुआकाशंअखंडितमेव।तथादेहनाशेपिदेहीप्र
रूपःअखंडितएवनिर्लेपकइत्यर्थः॥२२॥नजायतइति।कश्चित्किंचिन्नोत्पद्यते।नचनश्यति।किंतर्हिब्रह्मैवजग
द्विवर्त्तस्वरूपेणप्रकाशते।यथारज्जौकालत्रयेपिसर्पादिकंनास्ति।तथापिरज्जौसर्पोजायतेनश्यतइतिच।भ्रमव
शांतयासंसारः।विवर्त्तवादस्यैवप्रस्तुतत्वा
दित्यर्थः॥२३॥आकाशादिति॥

अजानन् सन् विषये सुखं वेत्ति जानाति। परं तु परिपाके विषसंपृक्तान्नभोजनवत् दुःखमेवाप्नोतीत्यर्थः॥१५॥
एवमात्मज्ञानसंसुखं कृत्वा वैराग्यार्थमाह॥ बुद्ध्वेति। यो दुर्मतिः विषयाणां निरसतां ज्ञात्वापि तत्रैव भूयः पुनः स्नेहं
करोति नासौ पुरुषो गर्दभ एव। कस्मात् समानधर्मत्वात् गर्दभ एवेत्यर्थः। विषयलंपटत्वे गर्दभनरयोरभेद इति भा
वः॥१६॥ यत्किंचिदिति। कस्यापि पदार्थस्य संकल्पनान्नरो नरकमाप्नोति। संकल्पाभावे चाक्षयं मोक्षसुखमेवाप्नो

विषये तु सुखं वेत्ति पश्चात् पाके विषान्नवत् १५ बुद्ध्वाप्यत्यंतवैरस्यं यः पदार्थेषु दुर्मतिः। बध्ना
ति भावनां भूयो न नरो नासौ स गर्दभः १६ यत्किंचिदपि संकल्पान्नरो दुःखे निमज्जति. न किंचिद
पि संकल्पात् सुखमक्षयमश्नुते १७ यथा स्वप्ने मुहूर्ते स्यात् संवत्सरशतभ्रमः तथा मायाविला
सोयं जायते जाग्रति भ्रमः १८ यांतःशीतलया बुद्ध्या रागद्वेषविमुक्तया साक्षीवत्पश्यतीदं हि जगत् ((जीवितं तस्य

ति॥१७॥ यथेति। मुहूर्तेकालमात्रे यथा शतसंवत्सरभ्रमो भवति। एवं जाग्रदवस्थायां अ
यं संसारो मायाविलासरूपो मरीचितोयवन्मिथ्याभूत इत्यर्थः॥१८॥ यांतरिति। यो नरो रागद्वेषरहितया अत एवां
तः शीतलया शांतया बुद्ध्या साक्षीवदिदं विश्वं विलोकयति तस्यैव जीवितं शोभते। रागद्वेषत्यागे मुक्तिरित्यर्थः॥

॥येनेति। हेयोपादेयंअञ्जसा त्यजता इदं मया ग्राह्यं इदं मया त्याज्यं इति संकल्पं त्यजता सता येन शुद्धो मति फलि
तं चैतन्यं ब्रह्म सम्यक्ज्ञातं। तस्य जीवितं सफलं॥ २०॥ इदानीं मरणनिमित्त शोको न कार्य इत्याह॥ हृदयेति। देह
नाशात् हृदयावच्छिन्नस्याकाशस्येव नाशो न भसीवच्छिन्नत्वं नश्यति। यथा घटनाशे घटावच्छेद एव नश्यति। न
त्वाकाशं॥ तथा शरीरनाशेपि देहसंबंध एव नष्टो नत्वात्मा नश्यति॥ अतो जना मूढा आत्मा नष्ट इत्युक्ता मिथ्यैव शो

येन सम्यक्परिज्ञातं हेयोपादेयमञ्जसा ॥ चित्तस्यान्ते स्थितं चित्तं जीवितं तस्य शोभते २० हृदया
काशमात्रस्य विनाशो देहनाशतः ॥ व्यर्थभूता निशोचंति नष्ट आत्मेति शंकया २१ घटादिषु प्रण
ष्टेषु यथाकाशमखंडितं ॥ तथा देहेषु नष्टेषु देही नित्यमलेपकः २२ न जायते म्रियते वा कदाचित्किं
चित्कदाचन ॥ जगद्विवर्त्तरूपेण केवलं ब्रह्म जृंभते २३ आकाशादपि विस्तीर्णः शुद्धः सूक्ष्मोऽव्य मः शिवः॥

कं कुर्वंति॥ २१॥ तदेवाह॥ घटादिष्विति। घटादिपदार्थेषु नष्टेषु आकाशं अखंडितमेव। तथा देहनाशेपि देही प्र
रूषः अखंडित एव निर्लेपक इत्यर्थः॥ २२॥ न जायत इति। कश्चित्किंचिन्नोत्पद्यते। न च नश्यति। किंतर्हि ब्रह्मैव जग
द्विवर्त्तस्वरूपेण प्रकाशते। यथा रज्जौ कालत्रयेपि सर्पादिकं नास्ति। तथापि रज्जौ सर्पो जायते नश्यत इति च। भ्रमव
शात्तथा संसारः। विवर्त्तवादस्यैव प्रस्फुटत्वा
दित्यर्थः॥ २३॥ आकाशादिति॥

हेराम।ईदृशःआत्मासकथंजायतेम्रियतेवा॥कीदृशः।आकाशादपिव्यापकः॥शुद्धोनिर्मलःनिर्लेपःसूक्ष्मोदुर्ज्ञे
यः।अव्ययोऽविनाशी॥शिवोमंगलरूपः।नहिदेशकालस्वरूपपरिच्छेदरहितस्यजन्मनाशौसंभवतइत्यर्थः॥२४
॥सर्वमिति।इदंदृश्यमानंसर्वंजगत्।आदिमध्यांतवर्जितंभावरहितंब्रह्मैवज्ञेयमितिज्ञात्वासुखीभव॥२५॥
वरमिति।हेरामहस्तेखर्परंगृहीत्वाचांडालगृहेषुभिक्षार्थंगमनंश्रेयान्नतुआत्मज्ञानरहितंजीवितमित्यर्थः॥२६॥

अयमात्माकथंरामजायतेम्रियतेऽथवा २४ सर्वमेकमिदंशांतमादिमध्यांतवर्जितं भावाभा
वविनिर्मुक्तमितिज्ञात्वासुखीभव २५ वरंशरावहस्तस्यचांडालागारवीथिषु भिक्षार्थमट
नंरामनमौर्ख्यहतजीवितं २६ नव्याधिर्नविषंनापत्तथान्यद्वापिभूतले दुःखायस्वशरीरोत्थं
मौर्ख्यमेवयथानृणां २७ ॥इतिश्रीयोगवासिष्ठसारेवैराग्यप्रकरणंप्रथमंसमाप्तं॥ वसिष्ठउवा
च संयमान्मनसःशांतिमेतिसंसारसंभ्रमः॥

एतदेवविवृणोति॥ नव्याधिरिति।व्याधिर्वातपित्तकफो
त्थमथ्याविषापदादयोनराणांतथादुःखदानभवंति॥ यथासहजंशरीरोत्थंदेहभवंमूर्खत्वंआत्माऽनात्मविवेक
ज्ञानरहितंबहिर्मुखत्वमित्यर्थः॥२७॥ इतिटीकायांप्रथमप्रकरणम्॥ इदानींजगतोमिथ्यात्वंनिरूपयति॥ संयमा

मनोनियमनात्संसारभ्रमोनश्यति। यथामंदरगिरौनिश्चलतांयातेसतिक्षीरसमुद्रोवीचिरहितोभवति॥१॥ चित्तोन्मेषेति। यतोमनसः संकल्पेसंसारोदयः तदभावेसंसाराभावः। अतोवासनाप्राणयोर्निरोधात्संकल्परहितंमनःकुरु। प्राणायामाभ्यासाद्वासनानाशमनोजयइत्यर्थः॥२॥ अयमिति। अयंमनसः संकल्पादुत्थितः संसारः निजसंकल्पनाशादेवनश्यति॥ अत्रनसंदेहः॥३॥ परिज्ञानेनेति। चित्रलिखितसर्पस्ययथाज्ञानादेवसर्पत्वंनश्यति। तत्कृताभीति

मंदरेस्पंदतांयातेयथाक्षीरमहार्णवः १ चित्तोन्मेषनिमेषाभ्यांसंसारस्योदयक्षयौ वासनाप्राणसंरोधादनिमेषंमनःकुरु २ अयंहिस्वविकल्पोत्थःस्वविकल्पपरिक्षयात् क्षीयतेदग्धसंसारोनिःसारइत्यसंशयः ३ परिज्ञानेनसर्पत्वंचित्रसर्पस्यनश्यति यथातथैवसंसारः स्थितएवोपशाम्यति ४ पुंसोनिजमनोमोहकल्पितोदुःखदःस्मृतः संसारचिरवेतालोविचारेणविलीयते ५ इदंश्रीराम मायेयंयास्वनाशेनहर्षदा॥

श्चा। तथा आत्माब्रह्मज्ञानादेवसंसारःशाम्यति। वस्तुतोनास्तीत्यर्थः। यथाचित्रेसर्पत्ववत्॥४॥ पुंसइति। पुंसः पुरुषस्यस्वकीयमनसोमोहेनैवकल्पितोरचितःसंसारलक्षणोबहुकालीनोवेतालस्तेनःतत्वविचारेणअयमात्माब्रह्मेतिविचारेणैवनश्यति॥ तस्माद्विचारेणसनाशनीयोयतोदुः

यो॰ वा॰ हे राम दृश्यी विलक्षणस्वभावा माया। या स्वनाशेन हर्षप्रदा। विलोक्यमाना च नाशमाप्नोति। अतोऽस्याः स्वभावो न प्र॰
सा॰ ज्ञायते॥६॥ अहो इति। हे तात। अहो आश्चर्यमेतत्। यदियं चित्रा विचित्रा माया विश्वस्य मोहकारिका॥ यया मोहितो २
५ य आत्मा शरीरी सर्वांगव्याप्तमप्यात्मानं न जानाति॥७॥ यदिदमिति। यदिदं दृश्यमानं जगत् तत्किमपि नास्ति न भूतं
न भविष्यति। यथा गंधर्वनगरं यथा वा मरुस्थले रविकिरणेषु जलभ्रमः कालत्रयेपि नास्ति॥८॥ यन्त्विति। य

न लक्ष्यते स्वभावोस्याः प्रेक्ष्यमाणैव नश्यति ६ अहो नु चित्रा माययं तात विश्वविमोहिनी स
र्वांगयोऽतमप्यात्मा यया आत्मानं न पश्यति ७ यदिदं दृश्यते किंचित्तन्नास्ति किमपि ध्रुवं यथा गं
धर्वनगरं यथा वारि मरुस्थले ८ यत्तु नो दृश्यते किंचिद्यत्तस्थमपि किंचन अविनाशं तद
स्तीह सत्तदात्मेति कथ्यते ९ स्वज्ञानदर्पणे स्फारे समस्ता वस्तुजातयः इमास्ताः प्रतिबिंबंति
सरसीव तटद्रुमाः १० सर्गश्चित्स्पंदमात्रात्मा सम्यग्दृष्टो विलीयते ११

त् अंते समीपे स्थितमपि वस्तु किमपि न दृश्यते। परंतु अविनाशं तद्रूपं तदस्ति स एव आत्मेति कथ्यते। स एव साक्षात्कारणीय इत्यर्थः॥९॥ स्वज्ञानेति। स्वकीये ज्ञानरूपे दर्पणे इमा दृश्यमाना वस्तुजातयः सर्वाः प्रतिबिंबतामापद्यंते॥ यथा तटद्रुमाः सरसि प्रतिबिंबंति॥१०॥ सर्गेद

सम्यग्ज्ञाने सति नश्यति ॥ मिथ्याज्ञाने सति उदयमाप्नोति। यथा तमसि दृश्यमानायां रज्जौ सर्पभ्रमः उदेति। रज्जु यातार्थ्य
ज्ञानान्नश्यति च तद्वदित्यर्थः॥ ११॥ भोगेति। मिथ्याभूतो प्ययं बंधो भोगवासनया दृढत्वं याति॥ वासनाशांत्या च बंधो पितानवं
तनुतां तुच्छत्वं काश्यं माप्नोति तत्तस्मात्सात्याज्येत्यर्थः॥ १२॥ मन इति। व्यापकात्परमात्मनः सकाशात् स्थिरात्। अस्थिराका.
रं चंचलं मन उत्पद्यते। स्थिराद्स्थिरोत्पत्तौ दृष्टांतः॥ यथास्थिरादपि समुद्रादस्थिरा ऊर्मयः उत्पद्यंते तद्वदित्यर्थः॥ १३॥ य

उदेत्यसम्यग्दृष्टौ तु रज्वां सर्पभ्रमो यथा ११ भोगभावनया याति बंधो दार्ढ्यमवस्तुजः यथोपशांतया
याति बंधो जगति तानवं १२ मनः संपद्यते तस्मान्महतः परमात्मनः सुस्थिरादस्थिराकारं तरंगाद्इवांबुधेः
१३ यत्त्वयं स्वैरमेवाशु संकल्पयति नित्यशः तेनेयमिंद्रजालश्रीर्जागति प्रवितन्यते १४ यथा
बालस्य वेतालो मृत्युपर्यंतदुःखदः असदेव सदाकारं तथा मूढमतेर्जगत् १५ अनुत्पन्नस्य कनके
कानके कटके यथा॥ त्वयमिति। तदेव मनो यं निरंतरं संकल्पं करोति। तेन संकल्पेन जाग्रदवस्थायां संसाररूपमिं
द्रजालमुत्पद्यते। अत एव मनः संकल्पितः संसार इत्यर्थः॥ १४॥ यथेति। यथा वेतालो मेतः बालस्य मूर्खस्य सर्वदा दुःखप्र
दो भवति। तथा असन्मिथ्याभूतमेवैतज्जगत् भ्रांतबुद्धेर्नरस्य सत्याकारं भासमानं सन्मरणपर्यंतानि दुःखानि ददाति॥ १५॥

यथासुवर्णेअज्ञुत्पन्नस्यबालस्यजीवंसुवर्णमजानतोनरस्यकनकनिर्मितेकटककुंडलादौकटकाद्येवेदमितिसत्यबुद्धिर्भवतिनत्विदंहेमेतिकदापिबुद्धिस्तज्ज्ञानाभावादेवेति॥१६॥तथाअज्ञस्यपुंसोनगरगृहवृक्षपर्वतसर्पादिविषयादृश्यभूतेवबुद्धिःसत्येव।परंतुविकारात्मकंसर्वंनामधेयमात्रमर्थाभावात्॥अधिष्ठानंपरमार्थभूतंदृक्पदार्थोब्रह्मैवसत्यमितिबुद्धिःकदापिनोदेति।ब्रह्मज्ञानाभावादित्यर्थः॥१७॥अज्ञस्येति।पूर्वोक्तमेवविशदयति।तत्त्वमजानतोविश्वंदुःखसमूहरूपमे

कटकव्यक्तिरेवास्तिनमनागपिहेमधीः १६ तथाज्ञस्यपुरागारनगनागेंद्रगोचरा इदंदृश्यंदृगेवास्तिनत्वन्यापरमार्थदृक् १७ अज्ञस्यदुःखौघमयंज्ञस्यानंदमयंजगत् अंधंभुवनमंधस्यप्रकाशंतुसचक्षुषः १८ यथाविशुद्धआकाशेसहसैवाभ्रमंडलं भूत्वाविलीयतेतद्वदात्मनीहाखिलंजगत् १९ आदित्याव्यतिरेकेणरश्मयोयेनभाविताः आदित्यएवतेतस्यनिर्विकल्पःसउच्यते ॥२०॥

व।तत्त्वज्ञस्यपरमानंदरूपमेतत्।तत्रदृष्टांतः।नेत्रहीनस्यजगदंधंतत्सहितस्यतुप्रकाशमेवेति॥१८॥यथेति।यथास्वतःशुद्धेपिगगनेमेघपटलंभूत्वापुनर्नश्यतितद्वद्ब्रह्मणिसर्वंजगदुत्पद्यतेलीयतेच।ब्रह्मणोनकिंचिद्दोषावहं॥१९॥आदित्येति।येनसूर्यकिरणाःसूर्यादभेदेनज्ञाताःतस्यतेकिरणाःसूर्यात्मकाएवेतियथा।तथायेनब्रह्माभिन्नंजगत्ज्ञातंतस्य

विवर्त्तादित्यर्थः

॥तंत्विति॥ यथा विचारितः पटस्तंतुमात्र एव तिर्यगूर्ध्वीभूततंतुव्यतिरेकेण पटाभावात् तथा विचारितं विश्वं ब्रह्मैव॥ जगदाकारेण ब्रह्मण एव परिणामादित्यर्थः॥२१॥ विश्वेति॥ ब्रह्मरूपादमृतसमुद्राज्जगल्लक्षणः कल्लोलविलासः उदेति तत्रैव विलीयते चेत्कथं मध्ये तन्मयो न स्यात्॥ यथा जलादुद्भूता लहरी लीयमाना वा जले लहरीदशायामपि जलात्मकैव॥२२॥ यथेति॥ जलादुद्भूताः फेनलहरीहिमबुद्बुदाः न जलाद्भिन्नाः तथा ब्रह्मणो विनिर्गतं विश्वं न ततो भिन्नं॥ कार्यका

तंतुमात्रो भवत्येव पटो यद्वद्विचारितः आत्मातन्मात्रमेवेदं तद्वद्विश्वं विचारितं २१ विश्ववीचीविलासोयं चित्सुधाब्धेरुदेतिच विलीयते च तत्रैव मध्ये कथमतन्मयः २२ यथा न तोयतो भिन्नाः फेनोर्मिहिमबुद्बुदाः आत्मनोपि तथा भिन्नं विश्वमात्मविनिर्गतं २३ आत्मनोपि तथा विश्वमात्मन्येव लयं व्रजेत् मृदि कुंभो जले वीचिः कनके कुंडलं यथा २४ आत्माज्ञानाज्जगद्भाति स्यात्मज्ञानान्निवर्त्तते रज्ज्वज्ञानादहिर्भाति तज्ज्ञानाच्च निवर्त्तते २५ ॥

रणयोरभेदादित्यर्थः॥२३॥ आत्मनइति॥ ब्रह्मण एवोत्पन्नं विश्वं तत्रैव लीयते। तत्र दृष्टांतत्रयमाह॥ मृदीति॥ मृत्तिकायां घटो यथा॥ जले लहरी यथा॥ कनके सुवर्णे आभरणं यथा॥ तद्वदात्मनोपि विश्वमात्मन्येवेत्यर्थः॥२४॥ आत्मेति॥ ब्रह्मणोऽज्ञानाद्विश्वं भासते न कै

तदनन्यत्वमारंभणशब्दादिभ्य इति ब्रह्मसूत्रं॥

कै ल्यज्ञानाच्च नास्ति यथा रज्ज्वज्ञानात्सर्पो भासते। रज्जुज्ञाने सर्पो नाम नास्ति॥२५॥

यो·वा· न्तस्येति। हेराम अदृश्यस्यदुर्ज्ञेयस्यात्मतत्त्वस्यविस्मरणेनजगतस्थिरतांप्राप्तं॥ तज्ज्ञानान्नास्ति। यथारज्जुज्ञानात्भुजंगो म·
सा· नास्ति॥ २६॥ स्वप्नइतिएवमितिश्लोकद्वयेन। यथास्वप्नेजाग्रदवस्थानास्त्येव। स्मरणेवजागरणमपिमिथ्यैव। मरणेउत्प २
७ त्तिर्मिथ्याभूता। उत्पत्तौमरणंतद्वत्॥ २७॥ एवंसत्असच्चस्थूलसूक्ष्मंकार्यंकारणंवातंतुपटादिकंकिंचिन्नास्ति॥ किंतुभ्रां
त्यासर्वमिदंभासते। किंच। सर्वमलभूतान् ज्ञानरूपात्ब्रह्मणएवनानाज्ञानानिभवंति। ब्रह्मसत्तयैवविश्वसत्तांगीकारात्तस्मा

तस्यादृश्यात्मतत्त्वस्यविस्मृत्यैवस्थितिंगतं जगत्स्यादीश्वराद्रामजगद्रज्जुभुजंगवत् २६ स्वप्ने
जाग्रदसद्रूपास्मृतौजाग्रदसद्वपुः मृतिर्जन्मन्यसद्रूपामृतौजन्माप्यसन्मयं २७ एवंनसन्नासदि
तिभ्रांतिमात्रंविजृंभते अनुभूयतएवास्तुकिंचित्सर्वानुभूतितः २८ ॥ इतिश्रीयोगवासिष्ठसारे
जगन्मिथ्यात्वद्वितीयप्रकरणं॥

॥ वसिष्ठउवाच ॥

तत्त्वात्मबोधएवैकःसर्वाशातृणपावकः प्रोक्तःसमाधिशब्देननतुतूष्णीमवस्थितिः १ (१)तिरेकेणकिं राम
चिन्नास्तीत्यर्थः॥ इतिटीकायांद्वितीयप्रकरणंसमाप्तं॥ इदानींजीवन्मुक्तिफलकंतत्त्वज्ञानंवर्णयति तत्त्वेति। परमात्मसाक्षात्कारे ७
णात्मज्ञानमेवैकंविषयतृष्णारूपतृणानांदाहकंभवति। तदेवतूलादाहकंब्रह्मज्ञानंसमाधिशब्देनोच्यते। नत्वेकांतमौनेन।

चिद्रिति।इदंसर्वंजगत्।ब्रह्मरूपमेवेतिभावयेत्।ईदृशीभावनायुक्तउपदेशांतेब्रह्मणियःस्थितःसएवचसुखंजा
नाति।यतोब्रह्मकवचःब्रह्मकवचंयस्यसतथा॥२॥सर्वेति।एवंविधोयोगीब्रह्मणैकीकृतचित्तोयस्तिष्ठतिसपरमे
श्वरएवनान्यः।कीदृशः।सर्वातीतंब्रह्मपदमेवावलंबतेआश्रयतिसःतथा।पूर्णेन्दुवत्शिशिरःशीतलःआशय
श्चित्तंयस्यसतथा॥३॥ब्रह्मेति।यश्चित्तेनब्रह्मप्रतिपादकानामुपनिषदांतत्त्वंभावयन्हर्षविषादरहितोभवति

चिदाकारमिदंसर्वंजगदित्येवभावयेत् स्थितइत्युपशांतस्थःसब्रह्मकवचःसुखी २ सर्वा
तीतपदालंबीपूर्णेन्दुशिशिराशयः यस्तिष्ठतिसदायोगीसएवपरमेश्वरः ३ ब्रह्मोपनिषदां
तत्त्वंभावयन्योंतरात्मना नोद्वेगीनचतुष्टात्मासंसारेनावसीदति ४ यथापर्वतमादीप्तंनाश्र
यंतिमृगाद्विजाः तद्वद्ब्रह्मविदं दोषानाश्रयंतिकदाचन ५ असंतइवसंतोपिकोपयंतिपरं

॥सएवसंसारेदुःखरहितोभवति॥अन्यःसर्वोदुःखवानेवेत्यर्थः॥४॥यथेति।यथादावाग्निनासंदग्धपर्वतंमृगप
क्षिणोनसेवंते।तद्वत्कामक्रोधादयोदोषाःब्रह्मज्ञानिनंकदापिनाश्रयंते॥५॥असंतइति॥संतोपिअसंतइवपरं
नरंकोपयंति।असंतःकोपासक्त्यापरंक्रोधयंति।संतस्त्वतरशीतलाअपितथाआचरंति।यथापरःक्रुध्यतिनहिंकश्चि

यो·वा·
सा·
८

निजमिति। परिपाकभूतं फलीभूतं निजं कर्म परीक्षितुं। अयमर्थः। कोपितेऽन्यनरेयथा असंतो वध्यंते तथा अस्माकं बं
धो भवेदिति न वेत्ति स्वकर्मपरिक्षार्थं। तेषां तु बंधो न भवतीत्यर्थः॥६॥ ज्ञात्वेति। यथा रज्जुसर्पभ्रमानंतरं रज्जुज्ञाने जाते
पि सर्पोत्थं भयमनुवर्त्तत एव। एवं ब्रह्मज्ञानेन नाशितनिखिलमोहो प्यात्मनि मोहकार्यं कामक्रोधलोभादिकं न मुंचति॥७
॥एवं तर्हि ब्रह्मज्ञो पि कर्मबंधः प्रसक्त इत्यत आह॥ स्फटिक इति। यथा निर्मलः स्फटिको जपाकुसुमादीनां प्रतिबिंबे पिव

निजं कर्म गुणोदारं परिपाकं परीक्षितुं ६ ज्ञात्वाप्यसर्पं सर्पोत्थं यथा कंपं न मुंचति विध्वस्ताऽखि
लमोहोपि मोहकार्यं तथात्मनि ७ स्फटिकः प्रतिबिंबेन यथा नायाति रंजनं तज्ज्ञः कर्मफले
नांतस्तथा नायाति रंजनं ८ अंतर्मुखतया तिष्ठन् बहिर्वृत्तिपरोपि सन् परिश्रांततया नित्यं नि
द्रालुरिव लक्ष्यते ९ अद्वैते स्थैर्यमायाते चित्ते च प्रशमं गते योगिनः कर्म कुर्वंति पश्यंतः स्वप्नवज्ज
((गत् १०
स्तु तो रंजनं नायाति रक्तो न भवति॥ तद्वत् ज्ञानी कर्म कुर्वन् दृश्यमानो पि कर्मणा न बाध्यते॥८॥ अंतरिति। ब
हिरिंद्रियैर्विषयग्रहणं कुर्वन्नपि ज्ञानी अंतर्मुखतया आत्मतया तिष्ठन् निद्रायुक्त इव लक्ष्यते। यतः संसारतापात् श्रांतो
निवृत्तः॥९॥ अद्वैत इति। चित्ते शांतिं गते सति। अत एव ब्रह्मणि स्थिरतामागते पि। योगिनो जगत्स्वप्नवत्पश्यंतः संतः कर्म

प्र·
कुर्वंति। ब्रह्मज्ञानेन जातसाक्षात्का
रणानां कृते पि कर्मणि बंधो नास्तीति भावः १०॥

अद्यैवेति।अद्यैवमरणमस्तु।कल्पांतपर्यंतंवाजीवतु।तथापिज्ञानीबंधंनाप्नोति।यथासुवर्णंकर्दमेक्षिप्तमपिकलंकं
नाप्नोतितद्वत् ११ तन्विति।ज्ञानीधीरपुरुषःकाश्यांतनुंदेहंत्यजतु।चांडालागारेपिवा।तथापिमुक्तएव।यतोज्ञानप्राप्ति
समयएवविगतचित्तोभिन्नलिंगोजातस्ततोमुक्तइत्यर्थः॥१२॥गोःपदमिति।नैराश्येनालंकृतताशोभिताआकृतिर्यस्य
तस्यवित्तस्यपुंसःपृथिवीगोःपदतुल्याभवति।मेरुःस्तंभप्रायःनभःमुद्रिकावच्छिन्नाकाशप्रायंत्रिभुवनंतृणम्।

अद्यैवमरणंवास्तुकल्पांतेनिचयेनवा। नज्ञःकलंकंनाप्नोतिहेमपंकगतंयथा ११ तनुंत्यजतु
वाकाश्यांश्वपचस्यगृहेथवा। ज्ञानसंप्राप्तिसमयेमुक्तोसौविगताशयः १२ गोःपदंपृथिवीमेरुः
स्थाणुराकाशमुद्रिका। तृणंत्रिभुवनंराम नैराश्यालंकृताकृतेः १३ अंतःशून्योबहिःशून्यःशू
न्यकुंभइवांबरे अंतःपूर्णोबहिःपूर्णःपूर्णकुंभइवार्णवे १४ ईप्सितानीप्सितोनस्तोयस्यांतर्वस्तु
एद्विषु ॥

यत्किंबहुनासर्वथावित्तस्यःश्रेयानित्यर्थः॥१३॥अंतरिति।ज्ञानीधीरःअंतर्बहिरपिशून्यप्रायः।शू
न्यकुंभवत्।अंतर्बहिःपूर्णोपिअर्णवेजलपूर्णकुंभवत्।तदात्मनैवसर्वत्रपूर्णत्वादित्यर्थः॥१४॥ईप्सितेति।यस्यपुं
सःपदार्थदर्शनेषुअयंमेइष्टोऽयमनिष्टइतिनभवति।अतएवसुप्तइवप्रवर्तते।सुप्तस्ययथाऽभिलाषाऽनभिल

भावस्तथा यस्य प्रियाप्रियाभावः समुक्त एवेत्यर्थः ॥१५॥ निर्ग्रंथिरिति। जीवन्मुक्त ईदृशो भवति। निर्ग्रंथिः गलिताहंकारो
गतसंदेहः। स्वभावतः अनिर्वाणः ब्रह्मणोंतर्भासमानत्वात्। परंतु लोकदृष्ट्या चित्रदीपइव प्रशांतः सन् स्थितः॥१६॥ अहं
कारेति। स जीवन्मुक्तः। योऽहंकारोत्पन्नां वासनां लीलयैव अनायासेन त्यक्त्वा ध्येयमपि संत्यज्य स्वरूपभूतस्तिष्ठति॥
१७॥ दूरेति। स पुमानिह लोकेपि मंगलं कल्याणं मोक्षमाप्नोति॥ सक्तः॥ यः सुहृदं बंधमिव दूरे त्यजति। यश्च सर्पादिवत्

सुसहवप्रवर्त्तेन समुक्त इति कथ्यते १५ निर्ग्रंथिः शांतसंदेहो जीवन्मुक्तः स्वभावतः अनिर्वाणो
पि निर्वाणश्चित्रदीपइव स्थितः १६ अहंकारमयीं त्यक्त्वा वासनां लीलयैव यः तिष्ठति ध्येयसंत्या
गी जीवन्मुक्तः स उच्यते १७ दूरे मुंचति बंधुं बंधमिव यः संगाद्भुजंगादिव त्रासं यो विदधाति वेत्ति
सदृशं भोगं रोगं च यः॥ स्त्रैणं यस्तृणवत् घृणां प्रकुरुते मित्रेष्वमित्रेष्वपि स्वांतं यस्य समं स मंगल
मिहामुत्रापि मर्त्योश्नुते॥१८॥ हृदयात्संपरित्यज्य सर्ववासनापंक्तयः।



जनसंगाच्च त्रस्यति। यश्च रोगं भो
गं च तुल्यं जानाति। यश्च स्त्रीसमूहे कुत्सितघृणवज्जुगुप्सां कुरुते। यस्य च चित्तं शत्रौ मित्रे च समं॥ ईदृशो जीवन्मु
क्तो भवतीत्यर्थः॥१८॥ हृदयादिति। यो दृश्यप्रपंचं मनसः सकाशात् दूरं त्यक्त्वा आकाशवत् निर्मलतरः सन् ।

अव्यग्रो भवति स परमेश्वरतुल्यवन्मुक्त एव ॥१९॥ समाधिमिति। यश्चित्तेन त्यक्ततृष्णः स ध्यानं करोतु संसारकर्माणि वा क
रोतु। मा करोतु वा। सर्वथाऽउत्तमाशयत्वान्मुक्त एव। सर्वथा तृष्णात्यागे मुक्तिरित्यर्थः ॥२०॥ अनात्मनीति। देहादावात्म
बुद्धिर्नाम बंधस्तन्नाशः नात्मबुद्धिः स एव मोक्षः। वस्तुत आत्मनो बंधमोक्षाभाव एव। नित्यमुक्तत्वात्। अद्वितीयब्रह्म
त्वादित्यर्थः ॥२१॥ दृश्यमिति। कालत्रयेपि भ्रमं अंतरा दृश्यं नास्त्येवेति ज्ञानेन मनसः सकाशात् यदि दृश्यनिराकरणं ज्ञा

व्योमसौम्यतरो व्यग्रः स मुक्तः परमेश्वरः १९ समाधिमथ कर्माणि मा करोतु करोतु वा हृदयेनास्ति स
र्वाशो मुक्त एवोत्तमाशयः २० अनात्मन्यात्मधीर्बंधस्तन्नाशो मोक्ष उच्यते बंधमोक्षौ न विद्येते नित्य
मुक्तस्य चात्मनः २१ दृश्यं नास्तीति बोधेन मनसो दृश्यमानसं संपन्नं चेत्तदुत्पन्ना परा निर्वाणनिर्वृ
तिः २२ न मोक्षो नभसः पृष्ठे पाताले न च भूतले सर्वाशासंक्षये चेतःक्षयो मोक्ष इतीष्यते २३ अनंते चि
द्घनानंदे निर्विकल्पैकरूपिणि स्थिते द्वितीयस्याभावात्को बंधो मोक्ष एव वा २४ ॥ तं तद्वा मोक्षसुखमेवेति ज्ञे

यं ॥२२॥ न मोक्ष इति। मोक्षो नाम कश्चित्पदार्थः। आकाशांते च पाताले वा भूमौ वा किं बहुना स्वभावाद्भुव द्वितद्देशवर्ती नास्ति
किंतु सर्वपदार्थविषयकतृष्णानाशे सति या चित्तशांतिः स एव मोक्ष इत्यर्थः ॥२३॥ अनंत इति। चिदानंदैकरूपे अविनाशि

नि विकल्पातीते ब्रह्मणि व्यापके स्थिते सति को
वा नाम बंधः कश्च मोक्षः द्वितीयाभावादित्यर्थः

मनइति।मनएवउल्लसन्मात्रेणबंधभावंप्राप्तंयतः।अतस्तस्यैवहेरामयत्प्रशमनंसएवमोक्षः॥२५॥इतिवासिष्ठसारेतृ
तीयप्रकरणं॥रसायनमयीगीतापरमानंददायिनी॥नानंदयतिकंनामसाधुसंगतिचंद्रिका॥एषइत्यादिना।इदानींमनोल
यंवर्णयति।स्वयमेवअम्लाना अखंडितायाचेतना अंतःकरणंसएवआत्मनोमनःसंज्ञकंभूत्वास्वयमितस्ततो धावति
किंकृत्वा।नानाविधमिष्टानिष्टंसंकल्प्य।तस्मात्संकल्पत्यागएवश्रेयानित्यर्थः॥१॥एतस्मादिति।सर्वव्यापिनीजगत्क्रीडा

मनएवोल्लसन्मात्रंबद्धतामगमद्यतः मनःप्रशमनोराम मोक्षएवावशिष्यते २५॥इतिश्रीवासि
ष्ठसारविवरणेतृतीयंप्रकरणं॥वसिष्ठउवाच॥एषस्वभावाभिमतंस्वतःसंकल्प्य धावति चेतना
स्वयमम्लानासैवेहमनआत्मनः॥१॥रसायनमयीगीतापरमानंददायिनी नानंदयतिकंनामसाध
संगतिचंद्रिका॥ एतस्मात्सर्वगाद्देवात्सर्वशक्तेर्महात्मनः विभागकल्पनाशक्तिर्लहरीवोत्थितांभसः
॥२॥अतःसंकल्पसिद्धेयंसंकल्पेनैववशाम्यति॥ रूपवत्तोखिलसामर्थ्यान्महाभागादेतस्मात्परमेश्वराद्वि

भ्वविभागरचनारूपाशक्तिरुत्थिता।यथाजलात्कल्लोलउदेतितद्वदित्यर्थः॥२॥अतइति।यतोयद्वस्तुयेननिमित्ते
नउत्पद्यतेतेनैवतन्नश्यतीति।दृष्टंवह्निज्वालादौ।यथावह्निज्वालावायुनाउत्पद्यतेतेनैवचशाम्यति॥ ९॥ ९॥

अतोहेतोरियंसंसारपरंपरासंकल्पेनैवसिद्धासंकल्पेनैवनश्यति। धनविषयसंकल्पाज्जाताब्रह्मविषयसंकल्पा न्नश्यतीत्यर्थः॥३॥ मनइति। अमुनासंकल्पेनैवाभ्युदितंमनः मनाक्स्वल्पमपिअनवेक्षणात्। अविचारादुदि तं। अतएवस्वस्यैवस्वप्नेमरणाकारं यथास्वप्नेस्वप्नमरणंवृथा। एवंमनोपितद्देवंप्रेक्ष्यमाणंसत् नास्तियथास्वप्नम रणं॥४॥ असम्यगिति। अनात्मनिदेहादौयदात्मभावनंआत्मबुद्धिः तदसम्यग्दर्शनंमिथ्याज्ञानं। अवस्तुभूतेसं

येनैवजायतेतेनवह्निज्वालेववायुना। ३ मनोमुनैवाभ्युदितंमनागेवानवेक्षणात् स्वस्वप्नम रणाकारंप्रेक्ष्यमाणंनविद्यते ४ असम्यग्दर्शनंयत्स्यादनात्मन्यात्मभावनं यदवस्तुनिवस्तुत्व तन्मनोविद्धिराघव ५ अयंसोहमिदंतन्मेएतावन्मात्रकंमनः तदभावनमात्रेणविचारेणविली यते ६ उपादेयानुपतनंहेयैकांतविवर्जनं यदेतन्मनसोरूपंतद्बंधंविद्धिनेतरं ७ ॥ ६ ॥

सारेयावस्तुबुद्धिः हेराघवतन्मनोजानीहि ५ अयमिति। आत्मायंदेहरूपोयः सोहं इदंधनादिकंममेत्येताव न्मिथ्याभूतज्ञानात्मकंमनः दृश्यंसर्वंनास्ति। एतावद्विचारमात्रेणविलीयते ६ उपादेयेति। उपादेयस्यविषया देर्यदनुपतनमनुसरणंग्रहणमितियावत्। हेयस्यसर्पादेर्विवर्जनंत्यागः तन्मनसोरूपं। इदंग्राह्यमिदंनेत्येत

॥मनइति॥संसारस्यकारणंमनएव।अतएवमनःपुरुषः मनसाकृतंतदेवकृतमितिज्ञेयंनिर्वासनेनमनसाशरीरकृ
तंनलगति॥मनोनिबंधनत्वात्पापपुण्ययोरित्यर्थः॥८॥चित्तमिति।पदार्थानांकारणीभूतंचित्तमेव।चित्तेविद्यमा
नेजगतांत्रयंविद्यतएव।निर्वासनेमनसिजगन्नास्त्येव।तस्मान्मनसएवप्रयत्नेनचिकित्साकर्तव्या॥९॥रामेति॥
हेरामवासनायांसत्यांबंधः।निर्वासनेमनसिमोक्षः।तस्माद्विवेकेनमनसिवासनांनिराकुरु॥१०॥यथेति।तृ

मनोहिजगतांकर्तृमनोहिपुरुषःस्मृतः।मनःकृतंकृतंलोकेनशरीरकृतंकृतं।येनैवालिंगिता
कांतातेनैवालिंगितासुता ८ चित्तंकारणमर्थानांतस्मिन्सतिजगत्त्रयं।तस्मिन्क्षीणेजगत्क्षी
णंतच्चिकित्स्यंप्रयत्नतः ९ रामवासनयाबद्धंमुक्तंनिर्वासनंमनः।तस्मान्निर्वासनीभावमाह
राशुविवेकतः १० यथाभ्रलेखाशशिनंसुधालेपंमषीयथा दूषयत्येवमेवांतर्नरमाशापिशा
चिका ११ अंतर्मुखतयासर्वंचिद्वह्नौत्रिजगत्तृणं जुहृतोंतर्निवर्तंतेरामचित्तादिविभ्रमः १२॥

ष्णायाएववासनारूपत्वात्तांनिंदति।हेरामआशारूपिणीपिशाचिकाराक्षसीनरंजीवंदूषयति।संसारंनयति।निर्म
लस्यदूषणेदृष्टांतद्वयं॥यथाभ्रलेखाचंद्रंमलिनयति॥मषीयथाचसौधं॥११॥अंतरिति।संसारादीन्द्रियाणिप्र



राम
११

ज्ञानाग्नौज्ञहुतोनरस्यचित्तादिःसर्वोभ्रमःस्वयमेवनिवर्त्तते॥नतत्ररथारथयोगाअथरथान्योगान्सृजत
इतिश्रुतेः १२ यदेति।चित्तनाशोपायमुपदिशति।यदाहेयोपादेयपदार्थान्मिथ्याभूतान्ज्ञात्वाकिंचिन्नस्म
र्यतेतदास्वतएवचित्तंविलीयतइत्यर्थः १३ घोरमिति।जाग्रदवस्थायांतुचित्तंघोरंपरमदुःसहं।स्वप्नाव
स्थायांमूढंतिष्ठति।सुषुप्त्यवस्थायांशांतंतिष्ठति॥तुरीयावस्थायांनश्यति॥नरश्चैतुरीयंभावनीयं॥१४॥

यदानभाव्यतेकिंचिद्धेयोपादेयरूपवित् स्थीयतेसकलंत्यक्त्वातदाचित्तंनजायते १३
घोरंजाग्रन्मयंचित्तंमूढंस्वप्नमवस्थितं शांतसुषुप्तिभावस्थंत्रिभिर्हीनंमृतंभवेत् १४ वि
लाप्यपंकंकतकरजोऽम्बुविलयंनयेत् यथात्मनितथाविद्धिविलाप्यविलयंमनः १५ चि
त्तंजानीहिसंसारंबंधश्चित्तमुदाहृतं पादपःपवनेनेवदेहश्चित्तेनचाल्यते॥१६॥ विलाप्येति।यथा

जलेवर्त्तमानंरजःकतकफलंविलाप्यपंकाभावंनयति॥जलंचशुद्धंकरोति।तथामनोपिआत्मनिविलाप्यवि
लयंनाशंनयेत्।आत्मानंशुद्धंचकुर्यात् १५ चित्तमिति।हेरामसंसारंचित्तमेवजानीहि॥चित्तमेवबंधः।देहो
पिचित्तेनैवततस्ततोभ्रमति।यथावायुनावाष्पभावेस्थिरोवृक्षस्तद्वत्॥१६॥ ॥ ॥ ॥ ॥

॥ हस्तमिति ॥ ॥ ॥ध्यानवार्त्तादीन्सर्वानवयवान्स्थिरीकृत्यएकांतमुपविश्यस्व
शमंमनोजयंकुर्यात् ॥मुक्तिसाधनानांमनोजयस्यप्राथम्यादित्यर्थः १७ चित्तमिति।यःपुनर्ध्यानवार्त्तामेवव
दन्सन्स्वतंत्रप्रवर्त्तमानशीलंएकंचित्तंजेतुंशक्नोति।समूढोनलज्जतेकथं॥चित्तजयेअसमर्थोध्यानवा
र्त्तांवदन्मूढइत्यर्थः १८ एकइति।मनोलक्षणोदेवएवंविजितःसर्वार्थसिद्धिदोभवति।यतस्तस्मान्मनोज

हस्तंहस्तेननसंपीड्यदंतैर्दंतांश्चपीडयन् अंगान्यंगैःसमाक्रम्यजयेदादौस्वकंमनः १७
चित्तमेकनशक्नोतिजेतुंस्वातंत्र्यवर्जितः ध्यानवार्त्तांवदन्मूढःसकिंलोकेनलज्जते १८
एकएवमनोदेवोजेयःसर्वार्थसिद्धिदः अनेनविफलःक्लेशःसर्वेषांतज्जयंविना १९ अनु
द्वेगःश्रियोमूलमनुद्वेगात्प्रमुच्यते जंतोर्मनोजयादन्यत्त्रैलोक्यविजयस्तृणं २० सत्संगो
वासनात्यागोऽध्यात्मविद्याविचारणं॥ यंविनासाधनांतरक्लेशोव्यर्थएवेत्यर्थः १९ अनुद्वेगइति।
दृष्टेवस्तुनिअप्राप्तेयउद्वेगाभावःसएवमोक्षलक्ष्म्याःकारणंनअन्यत्।अतएवमनोजयंविनाअन्यपदार्थे
जयेप्रयत्नोमिथ्येत्यर्थः २० तज्जयेसाधनमाह॥सत्संगइति।मनसोजयेचत्वारउपायाः॥एकःसतांसंगः॥

तृष्णात्यागः। ब्रह्मविद्यायां वेदांतशास्त्रस्य विचारः। प्राणायामश्चेति। अतश्चतुरउपायान् कुर्वतोऽल्पका-
लेन मनसो जयो भवति॥२१॥ मनसो जयस्य फलमाह॥ पूर्णेति। जिते मनसि सर्वं सुधारसैः पूर्णं भाति। तत्र
दृष्टांतः सोपानच्चरणस्य यथा सर्वा भूमिश्चर्मावृतेव भाति तद्वत्॥२२॥ नाहमिति। अहं संसारीति भावन
या मनसो बंधः॥ अहं ब्रह्मेति भावनया मनसो मुक्तिरित्यर्थः॥२३॥ चित्तइति। मनसि जिते सति संसारो न

प्राणस्पंदनिरोधाच्चेत्युपायाश्चेतसो जये २१ पूर्णे मनसि संपूर्णं जगत्सर्वं सुधाद्रवैः उ
पानद्गूढपादस्य ननु चर्मावृतेव भूः २२ नाहं ब्रह्मेति संकल्पात्सुदृढं बध्यते मनः सर्वं
ब्रह्मेति संकल्पात्सुदृढं मुच्यते मनः २३ चित्ते त्यक्ते लयं याति द्वैतमैक्यं च सर्वतः शिष्य
ते तत्परं ब्रह्म शांतं नित्यमनामयं २४ चिन्मात्रत्वं प्रयातस्य तीर्णमृत्योः सचेतसः यो भवे
त्परमानंदः केनासावुपमीयते २५॥

भासते। एकं सजातीयविजातीयस्वगतभेदरहितं॥ अवि
नाशि व्यापकं पूर्णं ब्रह्मैव सर्वतो भाति॥२४॥ चिदिति। ब्रह्मभावंगतस्य जरामरणरहितस्य ज्ञानिनो यः
परमानंदो भवेत्। तस्योपमा नास्ति॥ स तेनैवानुभवितव्यो नान्येनाब्रह्मज्ञानेनेत्यर्थः॥२५॥

॥इतिश्रीयोगवासिष्ठसारटीकायांमनोलयाख्यंचतुर्थंप्रकरणं॥इदानींवासनोपशमः कथ्यते॥हेरामअहं
कः इतिईदृशोयःस्वात्मविचारः।सएवचित्तलक्षणस्यदुष्टद्रुमस्यदुःखप्रापकवृक्षस्ययद्बीजंवासनात्मकं
तस्यदाहार्थंवैश्वानरोज्ञेयः॥आत्मविचारमंतरावासनानक्षीयतेतदुत्पथे॥१॥विचारेति।आधयोमनःपी
डाः विचारलक्षणेमुकुरेलग्नांअतएवधैर्यभारंप्रासांबुद्धिंनबाधंते।तत्रदृष्टांतः।यथाअलेख्येवर्त्तमानांल

॥इतिश्रीयोगवासिष्ठसारेमनोलयाख्यंचतुर्थंप्रकरणं॥वसिष्ठउवाच॥ रामस्वात्मवि
चारोयंकोहंस्यामितिरूपकः चित्तदुर्द्रुमबीजस्यदहनेदहनःस्मृतः १ विचारदर्पणेलग्नां
धियंधैर्यधुरंगतां आधयोननिलुंपंतिवाताश्चित्रलतामिव २ विचारोऽध्यात्मविद्यानांज्ञा
नंतत्वविदोविदुः ज्ञेयंतस्यांतरेवास्तिमाधुर्यंपयसोयथा ३ विचारेणपरिज्ञातःस्वभावस्यो
दितात्मनः अनुकंप्याभवंतीहब्रह्मविष्णुशिवादयः ४॥ तांवाताःनबाधंते।२।विचारइति।ब्रह्मवि
द्यानांयोविचारस्तमेवज्ञानंबुधाःजानंति।ज्ञेयंब्रह्म।ज्ञानमध्येएवास्ति।यथादुग्धमध्येमाधुर्यमस्तितद्व
त्॥३॥विचारेणेति।आत्मविचारेणपरिज्ञातःस्वस्यब्रह्मणोभावःसत्तायेनईदृशस्यअतएवउदितात्मनः॥

प्रकाशीभूतब्रह्मसाक्षात्कारस्यतस्यब्रह्मादयोपिदेवाअनुकंप्याभवंति॥कस्मात्ब्रह्मज्ञत्वात्॥४॥कि
मिदमिति।किमिदंविश्वंकिंअहंचकः इति निरंतरविचारशीलस्यपुंसः एतज्जगत् असदेवभवेत्।तन्न
भासते।असत्वादित्यर्थः॥५॥यस्येति।यस्यसर्वंखल्विदंब्रह्मेतिश्रुत्यर्थावगमान्मूढत्वंक्षीणं॥तस्यपु
नर्वासनानोदेति।यथामरौनिर्जलेदेशेविदुषोजलमतिर्नभवति॥६॥वासनेति।प्राणस्पंदनिरोध

किमिदंविश्वमखिलंकिंस्यामहमितिस्वयं विचारनिरतस्यैतदसदेवभवेज्जगत् ५
यस्यमोहःक्षयंयातंसर्वंब्रह्मेतिभावनात् नोदेतिवासनातस्यप्राज्ञस्याम्बुमतिर्मरौ ६॥
वासनासंपरित्यागाच्चित्तंगच्छत्यचित्ततां प्राणस्पंदनिरोधाच्चयथेच्छसितथाकुरु ७ सा
14 धुसंगमसच्छास्त्रपरोभवसिसन्मते नदिनैरेवनोमासैःप्राप्नोषीमांपरांधियं ८॥ ाद्वासनानाशः

॥वासनानाशाच्चचित्तंस्वभावंप्राप्नोति।ब्रह्मैवभवतीत्यर्थः॥पश्चाच्चित्तेक्षीणेसतियथेच्छसितथाकुरुक
र्मणोबाधकत्वाभावादित्यर्थः॥७॥साध्विति।हेसन्मतेविचारवतीबुद्धेसाधुसंगमब्रह्मविद्याशास्त्रपरायणो
यदिभवसि।तर्हिकतिपयैरेवदिनैर्ब्रह्मनिष्ठांबुद्धिंप्राप्नोषि।नमासाद्यपेक्षया॥८॥ ॥ ६ ॥ ॥

 सत्पुरुषसंगत्यात्तद्व्यवहाराच्चारात्। संसारचिंतानिवर्त्तनेनशरीरस्यनश्वरत्वभावनाच्चवासनाक्षीय 
 ने।वासनाक्षयेसाधनत्रयमित्यर्थः॥९॥दृढेति।दृढस्वभावस्यब्रह्मरूपानुसंधानात्मूर्खाअपिविष
 परिणामेदुःखदत्वाद्विषतुल्यंसंसारंअमृततांनयंति।ब्रह्मरूपतांप्रापयंति।अमृतंअज्ञानदशायाममृत
वज्ज्ञासमानंसंसारसुखंविषवदमृततांनयंति॥१०॥सत्येति।सत्यत्वेनदृष्टोऽयंदेहः।अलमत्यर्थंदेहोभव

सत्संगव्यवहारित्वादृढभावनभर्जनात् शरीरनाशदर्शित्वाद्भावनानचवर्तते ९ दृढभा
वानुसंधानाद्धिमूढाअपिराघव विषंनयंत्यमृततामसृतंविषतामपि १० सत्यभावेनदृष्टो
यंदेहोदेहोभवत्यलं दृष्टस्त्वसत्यभावेनव्योमतांयातिदेहकः ११ सुखतल्पगतोयेनस्व
प्नेदेहेनदिक्तटान् परिभ्रमसिहेरामसदेहस्तेक्वसांप्रतं १२॥ ॥ ॥ ॥ ॥

ति।देहउपचयेअस्यधातोःप्रयोगः।उपचयकरोभवति।देहपरंपराकारःसंसारप्रापकोभवतीत्यर्थः।सएवदे
हः।असत्यत्वेनदृष्टःसन्शून्यतांयाति।नभासतेमोक्षंददाति॥११॥सुखेति।सतोदेहस्यासत्यत्वेदृष्टांतः।हे 
रामत्वंस्वप्नावस्थायांशय्यायांवर्त्तमानोयेनदेहेनदिशांमंतान्भ्रमसि।सदेहोजाग्रदवस्थायांक्वयाति।स्वप्नवद्

देहइति। भव्येन मुमुक्षुणा सर्वनाशे प्राप्तेपि देहोहमिति बुद्धिर्देहात्ममतिः सर्वथा त्याज्या। यथा साधुना स
दाचारेण कुक्कुरमांससहिता चांडाली न स्प्रष्टव्या १३ ब्रह्मेति। एकं ब्रह्मैव भावयन् गतदुःखो यदा शांतस्तिष्ठ
सि। तदा स्वयमेव देहात्मबुद्धिर्विलीयत इत्यर्थः १४ सर्वत्रेति। सर्वत्र आब्रह्मादिस्थावरांते संसारे एकं ब्रह्मै
व तत्तदाकारेण भासते। नान्यत्। इति दृढभावनया अंतःशीतलः आनंदमग्नः सन् स्वस्थो भवति। तदाहंकार

देहोहमिति धीस्त्याज्या सर्वनाशेप्युपस्थिते स्प्रष्टव्या सानभाव्येन सश्वमांसेव पुल्कशी १३
ब्रह्मैकं भावयन्साधुः शांतस्तिष्ठन्गतव्यथः ततस्तेसावहंभावः स्वयमेव विनश्यति १४ सर्व
त्रैकावबोधेन स्वस्थोन्तःशीतलः सदा निरहंकृतिराकाशविशदस्तेन संस्थितः १५ अंतः
शीतलतायां हि लब्धायां शीतलं जगत् अंतस्तापोपतप्तानां दावदाहमयं जगत् १६॥ नाशादा

काशवन्निर्मलो देहात्मबुद्धिरहितो भवति। ब्रह्मभावनां विना देहात्मबुद्धिर्न निवर्त्तत इत्यर्थः १५ अंत
रिति। ब्रह्मभावनया अंतःशीतलतायां लब्धायां जगदपि शीतलं भाति। अंतस्तृष्णया परिभूतानां तु सर्वसं
सारोग्निवत् दाहक एव भासते। पित्तपीडितजिह्वायां शर्करा यथा शीतलत्वमपि यथा दाहकं तद्वदित्यर्थः॥

॥इतियोगवासिष्ठसारटीकायांपंचमंप्रकरणं॥ इदानींमननंनिरूपयति॥शुद्धइति।अहमिमंदेहंअन्यशरीरवत्पश्यामि।देहोहंनभवामीत्यर्थः।किंभूतोहंशुद्धोगुणातीतः निरंजनः मायातीतः अनंतः शाश्वतः बोधो ज्ञानरूपः।प्रकृतेर्मायाया अन्योपि।आभासिकदेहसंबंधाच्चेष्टमानः।व्यापारंकुर्वन्लोकदृष्ट्या॥१॥एत इति।यतएते मनोबुद्धींद्रियादयः॥सर्वेभावाः असंतो विद्यमानाः संतोवधानंविनासावधानतामंतरेण

॥इतियोगवासिष्ठसारेवासनोपशमनंनामपंचमंप्रकरणं॥ शुद्धोनिरंजनोनंतोबोधोहंप्रकृतेःपरः चेष्टमानइमंदेहंपश्याम्यन्यशरीरवत् १ योब्रह्मभावमादिश्यभक्तानांस्थिरचेतसां॥आनंदरूपमाधत्तेतंनृसिंहंसदानुमः॥ ॥एतेहिचिद्विलासांतामनोबुद्धींद्रियादयः असंतः सर्वएवाहोअवधानंविनास्थिताः २ आपद्यचलचित्तोस्मिजगन्मित्रंचसंपदि भावाभावविहीनोस्मितेनजीवाम्यनामयं।३॥ स्थिताःभासंते।कीदृशाःचिद्विलासांताः।चिद्विलासोब्रह्मानुभवएवांतोनाशोयेषांते।ब्रह्मसाक्षात्कारेणनभासंतइत्यर्थः २ आपदीति।यतोहमापदिदुःखापत्तौअचलचित्तःस्थिरमनाअस्मिसंपन्नदशायांजगन्मित्रंविश्वोपकारकोस्मि।भावाभावौउदयहानीतद्विहि

निरीह इति। ईदृशोस्मि। कीदृशः निरीहः ईहा सांसारिकी चेष्टा सा निर्गता यस्य। निराशस्तृष्णारहितः स्ववत् स्व
स्थो निर्मलः। निःस्पृहः विषयवासनास्पृहातद्रहितः शांतः स्थिरमनाः। अरूपः रूपग्रहणमन्येषामुपलक्षणं।
रूपरसगंधस्पर्शशब्देष्वनासक्तः अतएव चिरायुरविनाशी। अचलः चांचल्यहीनः एवंविधः स्थितोस्मि॥ ४॥
चिदिति। अधुना मया सम्यक् समीचीनं विज्ञातं। किं पंचभूतानि पृथिव्यादीनि। चिदेव ब्रह्मैव। भुवनत्रयं पंच

निरीहोस्मि निराशोस्मि स्ववत् स्वस्थोस्मि निःस्पृहः शांतोस्म्यहमरूपोस्मि चिरायुरचलः
स्थितः ४ चिदेव पंचभूतानि चिदेव भुवनत्रयं विज्ञातमधुना सम्यगहमेव चिदेव हि ५
सर्वातीतः सर्वगम्यः खमिवायमहं स्थितः यत्तदस्मि तदेवास्मि वक्तुं शक्नोमि नेतरत् ६
16 मय्यनंत चिदंभोधावाश्चर्यं जीववीचयः॥

भूतकार्यमपि चिदेव। अहमपि चिदेव। सर्वं खल्विदं ब्रह्मेति
श्रुतेः॥ ९॥५॥ ९ ॥सर्वेति। अयं प्रत्यक्षोहं। सर्वातीतः सर्वं भासमानं जगत्तस्मादतीतः। संसाररूपो नाहं। अतः
सर्वगो व्यापकः। खमिव वियदिव स्थितः। वास्तवं तत् ब्रह्म यदस्मि तदेवास्मि। ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिवि
धः स्मृत इति भगवद्वचनात्। तच्छब्देन ब्रह्म तदहमस्मि। इतरत् ततोधिकं वक्तुं न शक्नोमि॥ ६॥ मय्यीति। इदं आश्च

यतअनंतचिदंभोधौअपारज्ञानसमुद्रेमयिजीववीचयोजीवलक्षणाऊर्मयःसमुल्लसंतिउत्पद्यंते।खेलंति
व्यापारंकुर्वंति।प्रविशंतिपुनस्तत्रैवलीयंते।स्वभावतः।वीचीनामिवजीवानांस्वभावोयमित्यर्थः ७ मयीति
अनंतचिदंभोधौअनंतज्ञानसमुद्रेमयिआत्मनिविश्ववीच्यादिकल्पनासंसाररूपलहरीकल्पनाउदेतु।अ
थवास्तंनाशंमायातु।विश्वरूपोर्मीणामुदयेक्षयेवामेममनवृद्धिर्नवाक्षयोस्ति।कस्मात्पूर्णत्वादित्यर्थः॥८॥

समुल्लसंतिखेलंतिप्रविशंतिस्वभावतः ७ मय्यनंतचिदंभोधौविश्ववीच्यादिकल्पना
उदेतुवास्तमायातुनमेवृद्धिर्नचक्षयः ८ मदज्ञानोदितंविश्वंमय्येवलयमागतं अपरो
क्षचिदानंदसाम्राज्यमधुनास्म्यहं ९ सर्वभूतांतरस्थायनित्यमुक्तचिदात्मने॥प्रत्यक्चै
तन्यरूपायमह्यमेवनमोनमः १०॥ मदिति।ममात्मनःअज्ञानेनउदितंविश्वंमय्यात्मनिज्ञानेसतिलं
यंनाशंप्राप्तंअधुनाअपरोक्षःप्रत्यक्षःयश्चिदानंदःसएवसाम्राज्यंऐश्वर्यंतद्रूपोहमस्मि ९ सर्वेति।एवंविधायम
ह्यंममात्मनेएवनमोनमः॥कथंभूतायसर्वभूतांतरस्थायसर्वेषांभूतानामंतर्मध्येअंतर्यामिरूपेणस्थितायनि
त्यानित्यमुक्तश्चासौचिदात्माज्ञानरूपआत्मातस्मैप्रत्यक्चैतन्यरूपाय।प्रतिदेहंअंचनीतिप्रत्यङ्।अतएवचैतन्य

॥ इतिश्रीयोगवासिष्ठसारे टीकायां षष्ठंप्रकरणं॥ आत्मनिरूपणमाह ॥ बहिरिति। हेराघव। एवंविधः सन्लोके विहरसंसारव्यापारंकुरु। कीदृशः। बहिः कृत्रिमः संरंभः उद्यमोयस्यसतथा। हृदिमनसिसंरंभेणोद्यमवर्जितः। अतएवलोकदृष्ट्याबहिरेवकर्त्ता। अंतर्हृदितुअकर्त्तादेहाभिमानाभावादित्यर्थः १ अंतरिति। हेराघवएवंविधोलोकेविहरव्यवहारंकुरु॥ किंभूतः अंतर्मनसिसंत्यक्ताः सर्वा आशास्तृष्णायेनसः। यतो

॥इतिश्रीयोगवासिष्ठसारेआत्ममननंनामषष्ठंप्रकरणं॥ वसिष्ठउवाच॥ बहिःकृत्रिम
संरंभोहृदिसंरंभवर्जितः कर्त्ताबहिरकर्त्तांतर्लोकेविहरराघव १ अंतःसंत्यक्तसर्वाशो
वीतरागोविवासनः बहिःसर्वसमाचारोलोकेविहरराघव २ पूर्णांदृष्टिमवष्टभ्यध्येयः
त्यागविलासिनीं जीवन्मुक्ततयास्वस्थोलोकेविहरराघव॥३॥ वीतरागोविषयाभिलाषरहितः

अतएवविवासनः सर्ववासनाशून्यः। तथाबहिरेवसर्वेसमाचाराआरंभायस्यसतथा॥२॥ पूर्णामिति। ध्येयोयः संसारस्तस्यत्यागेनविलासति शोभतेसाध्येयत्यागविलासिनी। तामेवंविधांपूर्णांदृष्टिंअवष्टभ्यावलंब्यजीवन्मुक्ततयाजीवन्मुक्तभावेनस्वस्थः सन्हेराघवलोकेतिष्ठलोकव्यापारंकुरु॥३॥ ९ ॥ ८ ॥ ९ ॥

यो.वा. एकइति। अहमेको नान्यः। सजातीयविजातीयस्वगतभेदरहितः अतएवविशुद्धबोधः सत्यज्ञानइत्येवं विधेननिश्चय प्र.७
सा. वह्निनासिद्धांतरूपपावकेनद्वैतगहनं भेदकाननं। द्वैतमहमन्योन्यएषइतिकृत्यादिभेदज्ञानंतदेवगहनंप्रज्वाल्य
९७ दग्ध्वाएकः सन्सुखीभव। सुखरूपः स्याः ४ देहइति। अहंदेहः इतियोमानोदेहाभिमानः सएवपाशः बंधकत्वात्
तेनत्वंसर्वतोबद्धोसि। तर्हिकिंकार्यमतआह। अहंबोधोज्ञानरूपइतिमानः सएवखड्गस्तेनतंदेहाभिमानपाशं।

एकोविशुद्धबोधोहमितिनिश्चयवह्निना प्रज्वाल्यद्वैतगहनमेकएवसुखीभव ४ देहोहंमा
नपाशेनहंढबद्धोसिसर्वतः बोधोहं ज्ञानखड्गेनतंनिकृत्यसुखीभव ५ अनात्मनिरतिंत्य
क्त्वानिर्विभागोजगत्स्थितौ एकनिष्ठतयांतस्थः सच्चिन्मात्रपरोभव ६ अजाग्रत्स्वप्ननिद्रस्य॰
॰यत्तेरूपंसना
निकृत्यविच्छित्यसुखीभवआनंदरूपोभवइत्यर्थः ५ अनात्मनीति। हेराघवईदृशोभव। किंभू
तः निर्विभागः जगत्स्थितौ। जनस्थित्यांजगत्स्थिरताजगज्जातेर्विभागः विभजनंतद्रहितः जगद्रूपभेदकल्पनाही
नः। एकनिष्ठतयाएकस्मिन्आत्मन्येवनिश्चलतयाअंतस्थः बहिरिंद्रियव्यापारहीनः। अतएवसच्चिन्मात्रपरः सत्नित्यं
चित्ज्ञानरूपं। यद्ब्रह्मतत्परः तदेकभूतः। किंकोवदृशोभवामीतिचेत्शृणु। अनात्मनिदेहादौरतिंत्यक्त्वा। देहाद्यनासक्तिंविना

मान

राम
९७

अजाग्रत्स्वप्ननिद्रस्य निद्रासुषुप्तिः जाग्रत्स्वप्नसुषुप्त्यवस्थारहितस्य तुरीयस्यैनेतवविशुद्धस्य यद्रूपं तन्मयः सर्वे
दाभव। कथंभूतंरूपं सनातनं॥ नित्यं। सचेतनंज्ञानरूपं। विशुद्धं निरंजनं। ब्रह्मरूपोभवेत्यर्थः ७ माभवेति। ग्राह्य
भावात्माग्राह्यत्वस्वरूपोमाभवग्राहकात्मागृहीतृस्वरूपोपिमाभव। किंतर्हि अखिलासमग्राभावनांग्राह्यग्रा
हकात्वादिरूपांत्यक्त्वायन्मयोसितन्मयोब्रह्मीभूतोभव ८ संकल्पेनेति। हेमुनेमननशीलराघवसंकल्पजिघृ

सचेतनंविशुद्धंचतन्मयोभवसर्वदा ७ माभवग्राह्यभावात्माग्राहकात्माचमाभव भावना
मखिलांत्यक्त्वायन्मयस्तन्मयोभव ८ संकल्पेनैवसंकल्पंमनसैवमनोमुने स्थित्वास्वा
त्मनिनिष्ठत्वंकिमेतावतिदुष्करं ९ कस्तवायंजडोमूकोदेहोभवतिराघव यदर्थंसुखदुःखाभ्या
मवशः परिभूयसे १० त्वङ्मांसरुधिरादीनिद्धान्यचेतनस्यविग्रहः॥ त्वगादिरूपंनैवसंकल्पेन। नकुर्यात्तत्र

र्हि किंविधेयंमनसैवनिर्वासनेनमनः संकल्पात्मकंछित्वानिःसंकल्पंविधायात्मनिस्वस्वरूपेतिष्ठएतावतिसंक
ल्पवर्जनमात्रेकिंदुष्करं अनायाससाध्यमित्यर्थः ९ कइति। हेराघवजडोऽचेतनोमूकोनिरिंद्रियोदेहस्तव
कः। नतवदेहेनकश्चित्संबंधइत्यर्थः॥ यदर्थंयस्यदेहस्यार्थेअवशः परवशः सन्त्वंसुखदुःखाभ्यांपरिभू

यो·वा· मांसरुधिरादीनि देहस्थानि कः चैतन्यविग्रहो ज्ञानरूपस्त्वं कः एवं जानन्नपि अस्मिन्देहे आत्मबुद्धिं किं न जहा प्र· ७
सा· सि न त्यजसि ११ एतावतेति। एतावतैव एतावन्मात्रेण परमात्मा अवगम्यते। अयं देहो यत्काष्ठलोष्ठसमत्वे
१८ न काष्ठतृणतुल्यत्वेनावगम्यते देहस्य यत्तृणकाष्ठतुल्यत्वज्ञानं तदेव परमज्ञानमित्यर्थः १२ अहो न्विति। आ
होइत्याश्चर्येनु इति विचारे इदं चित्रं अद्भुतं किं यत्सत्यं ब्रह्म तत् नृणां विस्मृतं यदविद्यासंज्ञकमसत्यं तत्पुरोग्रे प

विजानन्नपि देहे स्मिन्नात्मधीं न जिहासि किं ११ एताव तैव देवेशः परमात्मावगम्यते का
ष्ठलोष्ठसमत्वेन देहो यमवगम्यते १२ अहो नु चित्रं यत्सत्यं ब्रह्म तद्विस्मृतं नृणां यदसत्यमवि
द्याख्यं तत्पुरः परिवल्गति १३ अन्यच्चित्रं यत्परं ब्रह्म तद्विस्मृतं नृणां यन्ममेदमविद्याख्यान
त्पुरः प्रबलायते १४ सर्वं ब्रह्मेति यस्यांतर्भावना सा विमुक्तिदा भेदबुद्धिरविद्येयं सर्वथा तां परि
त्यज १५॥ ९ ॥ ६ ॥ ९ ॥

रिवल्गति विस्फुरति। स्वं ब्रह्मस्वरूपं विस्मृत्य देहात्ममततयोजना
इति चित्रमित्यर्थः॥१३॥ अन्यदिति। अन्यदपि चित्रं यत्परं ब्रह्म तत् नृणां विस्मृतं। यत् ममेदमित्यहंकारममका राम १८
रास्यदं तत्पुरोग्रे प्रबलायते प्रबलं प्रबलवत् भवति १४ सर्वमिति। यस्यांतश्चित्ते सर्वं ब्रह्मेति भावनावासना सा विमु

॥इतिश्रीयोगवासिष्ठसारविवरणेशुद्धिनिरूपणटीकायांसप्तमंप्रकरणंसमाप्तं॥ आत्मनिरूपणाद्याह॥ यदीति।देहंशरी
रंपृथक्कृत्यदूरेकृत्वाचितिचैतन्येविश्रम्यपरित्वंतिष्ठसि।यद्वाहेरामयदित्वंदेहंपृथक्कृत्यदेहादिभ्योविविच्य।चितिवि
श्रम्यचिदेकाग्रोभूत्वातिष्ठसि।तदातृणीकृताशेषः तृणीकृतमशेषंविश्वंयेनेदृशः सन्स्वयमेकोब्रह्मभविष्यसि।तत्र
दृष्टांतमाह।अष्टावक्रे।यदिदेहंपृथक्कृत्यचितिविश्रम्यतिष्ठसि॥अधुनैवसुखीशांतोनावंधमुक्तोभविष्यसिएवमेवे
॥इतिश्रीयोगवासिष्ठसारविवरणेशुद्धिनिरूपणंनाम—सप्तमंप्रकरणंसमाप्तं॥वसिष्ठउवाच
यदिदेहंपृथक्कृत्यचितिविश्रम्यतिष्ठसि तदातृणीकृताशेषःस्वयमेकोभविष्यसि १ येनेदंवे
त्सितज्ज्ञात्वाकुरुप्रत्यङ्मुखंमनः ततःप्रकाशरूपत्वंद्रक्ष्यसिस्फुटमात्मनः २ येनशब्दरसंरूपं
गंधंजानासिराघव तमात्मानंपरंब्रह्मजानीहिपरमेश्वरं ३ यत्रभावाहिस्पंदंतेनिमीयंतेचयेन
न्यर्थः १ येनेदमिति।येनात्मनाइदंजगद्वेत्सिजानासितज्ज्ञात्वामनःप्रत्यङ्मुखमात्माभिमुखंकुरु।ततआत्माभिमुखम
नसाआत्मनःप्रकाशरूपत्वंस्फुटंद्रक्ष्यसि २ येनेतिहेराघवयेनात्मनाशब्दस्पर्शरूपरसगंधान्त्वंजानासि।तमात्मानंजी
वंपरमेश्वरंनियंतारंपरंब्रह्मजानीहि ३ यत्रेति।यत्रात्मनिभावाःपृथिव्यादयःपदार्थाःस्पंदंतेचलंते।येनात्मनानिर्मीयं

॥ सा॰ टी॰ ॥ १८ ॥

यो·वा· तमेवात्मानं स्वरूपं परमेश्वरं नियंतारं परं ब्रह्म जानीहि ४ यदिति। यत् यत् इदं तत्त्वं दृश्यं ज्ञेयं जगत्संबंधि जनत् युक्ति पृ·
सा· भिन्नो यैर्नेति संत्यज्य॥ त्यागे क्रियमाणे परत्वशिष्टं सर्वावधिभूतं चिन्मात्रं। निरवधेर्निषेधस्यासंभवात्। ततश्चि
१९ द्रूपं प्राप्य सोहमस्मीति पुनः पुनर्भावय चिंतय ५ ज्ञानमिति। ज्ञानं भवतः सकाशात् भिन्नं न। अतो ज्ञेयं च ज्ञानात्पृथ
क् नहि। अत एव इतरवत् ब्रह्म भिन्नं किंचिन्नास्ति। तस्माद्भेदो द्वैतं न विद्यते ६ ब्रह्मेति। ब्रह्मविष्णुशिवेंद्राद्या देवाः स

तमेवात्मानमात्मानं रूपं जानीहि राघव ४ यद्यद्ज्ञेयमिदं तत्त्वं नेति संत्यज्य युक्तिभिः प्रा
प्यावशिष्टं चिन्मात्रं सोहमस्मीति भावय ५ ज्ञानं न भवतो भिन्नं ज्ञेयं ज्ञानात्पृथङ् नहि अतो
नात्मेतरं किंचित्तस्माद्भेदो न विद्यते ६ ब्रह्मविष्णुशिवेंद्राद्या यद्यत्कुर्वंति सर्वतः तदहं चिद्वपुः
सर्वं करोमीत्येव भावय ७ अहं सर्वमिदं विश्वं परमात्माहमव्ययः न भूतं नास्ति नो भावि मत्तोन्य
दिति भावय ८ एकं ब्रह्म चिदाकारं सर्वात्मकमखंडितं॥ र्वतः सर्वदा यत् सृष्टिस्थितिसंहारस्वर्गपालना राम

दि यत्कुर्वंति। चिद्वपुः चैतन्यरूपोहमेव तत्तत्सर्वं करोमीति भावय ७ अहमिति। इदं सर्वं विश्वं अहमेव। अव्ययोऽविना १९
शी परमात्माप्यहमेव मत्तोऽन्यद्भूतं नास्ति न वर्तते। न भावि न भविष्यतीति चिंतय ८ एकमिति। एकमद्वितीयं चिदाकारं चैतन्यरूपं सर्वात्मकं सर्वस्वरूपं।

अखंडितं अव्ययं। निष्कंपं कंपरहितं भूरि बहु यथा अथवा शेषमुर्वरितं अशेषं सर्वं वा ब्रह्मैवास्तीति यत्नतश्चिंतय॥९॥
नाहमिति। अहं नास्मि। अन्यदपि नास्ति आनंदपूर्णं निरंतरं ब्रह्मैवास्तीति। अनुद्वेगात्। उद्वेगं विहाय उपास्यतां।
सेव्यतां॥१०॥ ग्राह्येति। सर्वदेहिनां ग्राह्यग्राहकसंबंधे सामान्ये साधारणे सति योगिनो यत्सावधानत्वं तदेवात्मनो
र्चनं पूजनं। न हि पुष्पादिभिः पूजनं भवतीत्यर्थः॥११॥ इति श्रीयोगवासिष्ठसारे टीकायां आत्मार्चनं ——— ना

निष्कंपं भूरि वाशेषमिति भावय यत्नतः॥९॥ नाहं न चान्यद्वास्तीति ब्रह्मैवास्मि निरंतरं आनंद
पूर्णं सर्वत्रेत्यनुद्वेगादुपास्यतां॥१०॥ ग्राह्यग्राहकसंबंधे सामान्ये सर्वदेहिनां योगिनः सावधा
नत्वं यत्तदर्चनमात्मनः॥११॥ इति श्रीयोगवासिष्ठसारे आत्मार्चनं नामाष्टमं प्रकरणं
वसिष्ठ उवाच तस्मिन्देहेंद्रियादीनां संघाते स्फुरति स्वतः अयं सोहमितीभावः स जीवो मल
गुंठितः॥१॥ सर्वमेव चिदाकाशं ब्रह्मेति घननिश्चये॥ माष्टमं प्रकरणं ८॥ इदानीं आत्मनिरूपणं नि
रूपयति। वसिष्ठ उवाच॥ तस्मिन्निति। तस्मिन्प्रसिद्धे देहेंद्रियादीनां संघाते अयं सोहमिति यो भावेन स्वतो यः स्फु
रति। स कृत्रिममलेन गुंठितश्च्छादितो जीवो ज्ञेयः॥१॥ सर्वमिति। सर्वमिदं चिद्रूपमाकाशवत् निर्मलं ब्रह्मेति घननि

१०

यानेसतिजीवोनिःस्नेहदीपवत्।तैलंविनादीपइवशमंयाति।तमेवजीवत्वंत्यजेदित्यर्थः॥अथवायमर्थः॥
यथानिस्तैलोदीपोदीपत्वंविहायमहातेजोरूपोभवति।कारणेलीयते।तद्वदित्यर्थः २ स्वेति।यथाकश्चि
द्विप्रोपिस्वकीयंमहत्वमुपेक्ष्यदुरीहयादुष्टचेष्टयानीचसेवादिनाभूद्रत्वमंगीकरोति।तथेश्वरआत्माऽज्ञाने
नजीवत्वमंगीकरोति ३ असत्यमिति।जीवइदंअसत्यमेवशरीरंसंकल्प्यमूढात्मासन्पश्यतिअहमितिमन्य

स्थितिंयानेशमंयातिजीवोनिःस्नेहदीपवत् २ स्वमहत्वंयथोपेक्ष्यकश्चिद्विप्रोदुरीहया अं
गीकरोतिभूद्रत्वंतथाजीवत्वमीश्वरः ३ असत्यमेवसंकल्प्यभ्रमेणेदंशरीरकं जीवःपश्य
तिमूढात्माबालोयक्षमिवोत्थितं ४ मृत्सेभकेयथेभत्वंशिशुरध्यस्यवल्गति अध्यस्यात्मनि
देहादौमूढस्तद्वद्विचेष्टते ५ चित्रसर्पःपरिज्ञातोनसर्पभयदोयथा जीवसर्पःपरिज्ञातस्तथादुः



तियथाबालोमिथ्याभूतमुत्थितंयक्षंपश्यति ४ मृत्सेति।यथाशिशुर्बालोमृत्सेभकेमृत्तिकागजेइभत्वंगजत्वंअध्य
स्यआरोप्यवल्गतिचेष्टतेतथामूढआत्मनिदेहादीनध्यस्यचेष्टते ५ चित्रेति।यथाचित्रेलिखितःसर्पःपरिज्ञातःस
नसर्पभयदोनभवति।तथाजीवरूपःसर्पोब्रह्मत्वेनज्ञातोदुःखदोदुःखद इनभवति॥ ६॥ ॥

स्रजीति। यथास्रजिमालायांभ्रमादुत्थितःसर्पःमालाज्ञानान्मालायामेवलीयतेतथाआत्मनिभ्रमोत्थितो भेदआत्मनःस्वरूपज्ञानादात्मन्येव लीयते ७ नैकमिति। यथाअनेकमप्यंगदंआदिशब्देनकुंडलकंकणा दिसंस्थितंतत्एकंहेमैवतथाउपाधिभिरनेकोप्यात्मस्वरूपतोब्रह्मरूपेणएकएव ८ शरीरइति। यथाश रीरेअवयवाहस्तपादादयोनानाभांतियथामृदोविकाराघटशरावादयोनानाभांति। तथाअद्वैतंब्रह्मैवस्था

स्रजिसर्पोयमध्यस्तोमालायामेवलीयते आत्मनिभ्रमोत्थितोभेदआत्मन्येवविलीयते ७
नैकमप्यंगदाद्यंचयथैकंहेमसंस्थितं उपाधिभिरनेकोपितथात्मैकःस्वरूपतः ८ शरीरेव
यवायद्वद्विकाराश्चयथामृदः अद्वैतंद्वैतवद्भातितथास्थावरजंगमं ९ मणितोयघृतादर्शेष्वे
कमप्याननंयथा भात्यनेकमिवात्मापितथाधीष्वनुबिंबितः १० धूलिधूमांबुदैर्यद्वन्मलिनी
२१ क्रियतेनभः परामृष्टस्तथैवात्माविशुद्धःप्राकृतैर्गुणैः ११ ॥ वरजंगमरूपंद्वैतवद्भाति ९ मणीति। यथा
एकमेवाननंमुखंमणौतोयेघृतेआदर्शेच पृथक्प्रतिबिंबितमपिएकमेवसत्अनेकमिवभाति। तथाएकएवा
त्माधीषुबुद्धिषुअनुबिंबितःअनेकइवभाति १० धूलीति। यथानिर्मलमपिनभोधूलिधूममेघैर्मलिनीक्रीय

अग्नीति। यथालोहमग्निसंगादग्नित्वं गच्छति। तथेंद्रियादिकमात्मसंगादात्मत्वं गच्छति १२ अदृश्य इति।। 
यथा अदृश्यो राहुरिंदुना गृहीतो न दृश्यते। तथा अनुभवमात्रात्मा रूपआत्मादृश्येन शरीरादिना ज्ञात्वावलोक्यते।। 
१३।। आत्मन इति। आत्मनो जडस्य तु शरीरादेः संगादनात्मत्वं। जडस्यात्मसंगादात्मत्वं। एवं परस्पराध्यासः। त
त्र दृष्टांतः। जलाग्न्योः संगात् यथाग्नेर्जलत्वं। जलस्याग्नित्वमिति १४ असत्येति। असत्यस्य जडस्य चित्तरूप

अग्निसंगाद्यथालोहमग्नित्वमुपगच्छति आत्मसंगात्तथा गच्छत्यात्मतामिंद्रियादिकं १२॥ मूं
अदृश्यो दृश्यते राहुर्गृहीतो न यथेंदुना तथानुभवमात्रात्मा दृश्येनात्मावलोक्यते १३ आत्मनो जड रू
संगात्स्यादनात्मत्वं जडस्य तु स्यादात्मसंगादात्मत्वं जलाग्न्योः संगवन्मिथः १४ असत्य जड चि पं
त्तांशनयनाच्चिद्रूपो जंतुः सहाजन्तुगतोऽहं निरिवरूपं त्वमुज्झति १५ इक्षौ गुडो तिले तैलं काष्ठे वह्निः

त्तांशस्य नयनात् जडरूपांतःकरणस्य चिद्रूपत्वभावनात् चिद्रूपश्चिद्रूपआत्मा जन्तुर्जन्म उज्झति त्यजति मुक्तो भवती
त्यर्थः। तत्र दृष्टांतः। अग्निः सहाजलगतो यथा रूपमग्नित्वं उज्झति १५ इक्षाविति। यथेक्षौ वर्त्तमानो गुडो यत्नेन ल
भ्यते। तिले वर्त्तमानं तैलमपि यत्नेनैव लभ्यते। काष्ठे वह्निश्च। दृषदि पाषाणे अयो लोहं यत्नेन दाहादिना लभ्यते धेनौ घृ

वपुष्षुदेहेषुवर्त्तमानआत्मायत्नेनश्रवणमनननिदिध्यासनादिनालभ्यते १६ स्फटिकेति॥यथानीरंध्रेपि
स्फटिकात्मनिस्फटिकस्वरूपेस्थितंखमाकाशंवीक्ष्यते॥तथासर्वपदार्थेषुचिद्रूपःपरमेश्वरोदृश्यते॥१७॥
बहिरिति।ज्योतिःस्वप्रकाशाद्बहिरंतःस्फुरदपियथैकमेव।तत्रदृष्टांतः।रत्नकुंभप्रदीपवत्।रत्नेबहिरंत
श्चकुंभप्रदीपेअंतर्मध्येएव।तथाआत्मनःस्वरूपंबहिरंतःमनसिविषयेष्वपिभासमानमेकमेव॥१८॥

धेनावाङ्मयवपुष्यात्मालभ्यतेचैवयत्नतः १६ स्फटिकात्मनिनीरंध्रेस्थितंखंवीक्ष्यतेयथा त
थासर्वपदार्थेषुचिद्रूपःपरमेश्वरः १७ बहिरंतःस्फुरज्ज्योतीरत्नकुंभप्रदीपवत् स्वप्रकाश
यथैवैकंस्वरूपंआत्मनस्तथा १८ दर्पणेबिंबितोह्यर्कःप्रकाशंकुरुतेयथा तथाप्रकाशयत्या
त्मास्वच्छधीष्वनुबिंबितः १९ यत्रस्थितेयंविश्वश्रीःप्रतिभामात्ररूपिणी रज्ज्वांभुजंगवद्भाति
(( स्वयमात्मासदो

22 दर्पणइति।दर्पणेआदर्शेप्रतिबिंबितोभानुर्यथाप्रकाशंकुरुते।तथास्वच्छधीषुनिर्म
लचित्तेषुअनुबिंबितआत्माविषयान्प्रकाशयति १९ यत्रेति।यत्रात्मनिस्थितेयंविश्वश्रीःसंसारशोभाप्रतिभा
मात्ररूपिणीस्फूर्तिरूपासतीरज्ज्वांभुजंगन्यायेनभाति।सआत्मासदाऽदितःप्रकाशोस्ति।यथारज्ज्वज्ञानेसर्पभ्र

आत्मस्वरूपमाह॥श्लोकैः षड्भिः॥ आद्यंताभ्यामुत्पत्तिनाशाभ्यां रहितः चैतन्यरूपः सत्यस्त्रिकालावस्था
यी विकल्पाद्भेदाद्रहितो निरूपितमाकाशं येन। तस्माद्वा एतस्मादात्मन आकाशः संभूत इति श्रुतेः॥ जीवस्याद्यः
स्वरूपभूतः परात्सर्वस्मात्पर ईदृश आत्मा २१ आत्मेति। विशुद्धं चैतन्यं स्वमेव रूपं प्रकाशाय यस्य शाश्वतो नित्यः
विभुर्व्यापकः विकाररहितः स्वयंप्रकाशः अर्कप्रकाशवत्स्वसत्ता यस्य स ईदृश आत्मा २२ आत्मेति। अत्र

आद्यंतरहितः सत्यश्चिद्रूपो निर्विकल्पकः आत्मा निरूपिताकाशो जीवस्याद्यः परात्परः २१
आत्मा विशुद्धचैतन्यस्वरूपः शाश्वतो विभुः निर्विकारः स्वयंज्योतिः स्वभावोऽर्कप्रकाशवत्
२२ आत्मानुभवमात्रात्मा सर्वगः सर्वसंश्रयः प्रकाशानन्यचैतन्याव्यतिरिक्तो नलोष्णवत् २३
चित्तवर्जितचिन्मात्रः परमात्मावभासकः सबाह्याभ्यंतरव्यापी निष्कलो निश्चलाश्रयः २४ य
((आत्मा चिन्मयः स्वस्थः प्रबुद्धो

भवमात्रस्वरूपः सर्वगो व्यापी सर्वेषां संश्रय आधारः प्रकाशादनन्यः प्रका
शरूपः चैतन्याद्व्यतिरिक्तश्चैतन्यरूपः यथाग्निरुष्णरूपः स आत्मा २३ चित्तेति। अंतःकरणचतुष्टयाद्भिन्नः चि
द्रूपभासकः प्रकाशकः बाह्याभ्यंतरव्यापी कलातीतः निश्चल आश्रयो यस्य स ईदृशः परमात्मा २४ य इति। चिन्म

राम २२

त्या
प्रबुद्धो ज्ञानरूपः अपच्चयच्युतः क्षयरहितः हे यस्माऽस्यासु ज्झितस्त्यक्तः देशकालजात्यादिभिरसंगतः असंब
द्धो यः स आत्मा २५ ब्रह्मांड इति। यथा ब्रह्मांडे वायुः सर्वेषु भूतेषु गतः तथा सर्वभूतगतो पितत्पुमुक्तोऽसंगी स्थितः।
असंगो ह्ययं पुरुष इति श्रुतेः॥ स आत्मा॥२६॥ एवमिति। चिदंबराभोगे आभरणे ओम्निरवौ धरायां विवरकोशे पा
ताले या चित्सैव कीटकोटरे सामान्यकीटमध्ये॥ समो मशके समो नागे इति श्रुतेः २७ नबंध इति। बंधमोक्षकत्व

हे यस्माद्यो ज्झितो देशकालजात्याद्यसंगतः २५ ब्रह्मांडे च यथा वायुः सर्वभूतगतस्तथा स ए
व भगवानात्मा तत्पुमुक्तोऽप्यत्र स्थितः २६ एवं चिद्गगनाभोगे भूषणे ओम्निभास्करे धराविवर
कोशस्था सैव चित्कीटकोटरे २७ न बंधोऽस्ति न मोक्षोऽस्ति ब्रह्मैवास्ति निरंतरं नैकमस्ति न च द्वैतं
संवित्स्फारं विजृंभते २८ ब्रह्म चिद्ब्रह्म भुवनं ब्रह्म भूतपरंपरा ब्रह्माहं ब्रह्म मच्छत्रुर्ब्रह्म म
न्मित्रबांधवाः २९ एकस्मिन्निर्मले येन परे परमपावने॥

द्वैतानि न संति। कल्पितत्वात्। किं तर्हि स्फारं संवि
द्रूपं निरंतरं ब्रह्मैवास्ति तदेव च विजृंभते प्रकाशते २८ ब्रह्मेति। चित् ज्ञानं भुवनं लोकः भूतपरंपरा जंतुश्रेणिः मम
मशत्रुर्देवदत्तादिः मम मित्राणि बांधवाश्च अहं च सर्वं ब्रह्मैवेत्यवधार्यं॥२९॥ ९ ॥ ६ ॥ ९ ।

चिदिति। चिच्चेत्यकलनाभासभासकल्पनैवबंधः। तन्मुक्तिः॥ चिच्चेत्याभावएवमुक्तिः यत्तत्सर्वमात्मैवेतिस
र्वशास्त्रसिद्धांतः ३० चिदिति। इहचिदस्तिइदं विश्वं अहं त्वं लोकाश्च चिदेवेतिसंग्रहः सिद्धांतः ३१ यदिति॥
यदस्तियद्भातितदात्मस्वरूपमेवतद्व्यतिरिक्तं यद्भातितन्नास्त्येव। केवलात्मस्वभावसंविदेवप्रतिभाति। इदंग्रा
ह्यं अयंग्रहीतेतिमृषाविकल्पोमिथ्येत्यवधार्यं॥ ३२॥ इतिश्रीयोगवासिष्ठसारेआत्मनिरूपणंनामनवमंप्रक

संश्रिताचित्तविश्रांतिर्भृत्युस्तंनजिघांसति १ चिच्चेत्यकलनाबंधस्तन्मुक्तिर्मुक्तिरुच्यते चि
च्चेत्य खिलमात्मेतिसर्वसिद्धांतसंग्रहः ३० चिदिहास्तीहचिन्मात्रमिदंचिन्मयमेवच चित्त्वंवि
दहमेवेतिलोकाश्चिदितिसंग्रहः ३१ यदस्तियद्भातितदात्मरूपंपच्चान्यतोभातिनचान्यदस्ति
स्वभावसंवित्प्रतिभातिकेवलाग्राह्यंग्रहीतेतिमृषाविकल्पः ३२॥ इतिश्रीयोगवासिष्ठसारे
आत्मनिरूपणंनामनवमंप्रकरणं ९॥ वसिष्ठउवाच दृश्यदर्शनसंबंधान्नभवेत्परमंसुखं न
दैवैकांतसंचिंत्यामनोनाशःपरंपदं॥१॥ ९९ रणंसमाप्तं॥ इदानींजीवन्मुक्तिंनिरूपयति॥ दृश्येति। दृ
श्यदर्शनसंबंधादिंद्रियविषयसंबंधान्नपरंसुखंजायते। एकांतसंचिंत्याब्रह्माहमितिज्ञानेनयोमनोनाशस्तदेव

दृश्येति। विषयेंद्रियसंबंधे यानुत्तमा सुखसंवित् सैव दृश्यसंबंधसंवलितः दृश्यसंबंधभावसंयुक्तो बंधः। तन्मु
क्त्या दृश्यसंबंधाभावे केवलं सुखभावमुक्तिरित्यर्थः २ शुद्धमिति। सदसतोर्जडजडयोर्मध्ये वर्तमानं शुद्धं परं अ
वलंब्य सबाह्याभ्यंतरं विश्वं मा गृहाण मा वा विमुंच। विश्वं कालत्रये पि नास्तीत्यर्थः ३ जडेति। जडाजडज्ञानयोर्म
ध्ये यत्पारमार्थिकं तत्त्वं अनंतं आकाशवत् हृदयं अयं तेन प्राप्नोति। एतादृशं व्यापकं सत् शुद्धं तत्त्वं सर्वदाश्रय॥४॥

दृश्यदर्शनसंबंधे सुखसंविदनुत्तमा दृश्यसंवलितो बंधस्तन्मुक्त्या मुक्तिरुच्यते २ शुद्धं सदसतो
र्मध्ये पदं लब्ध्वाऽवलंब्य तत् सबाह्याभ्यंतरं विश्वं मा गृहाण विमुंच मा ३ जडाजडदृशोर्मध्ये य
त्तत्त्वं पारमार्थिकं अनंताकाशहृदयं तत्सदाश्रय सर्वदा ४ द्रष्टुर्दृश्यस्य सत्तांगबंध इत्यभिधी
यते द्रष्टा दृश्यवशाद्बद्धो दृश्याभावे विमुच्यते ५ द्रष्टृदर्शनदृश्यानि त्यक्त्वा वासनया सह द
र्शनं प्रथमाभासमात्मानं समुपास्महे ६ द्वयोर्मध्ये गतं नित्यमस्ति नास्तीति पक्षयोः ७ द्रष्टुरिति। द्र

ष्टुर्दृश्यस्य या सत्तासंबंधः तद्वशात् द्रष्टा बद्धः तदभावे विमुच्यते ५ द्रष्ट्रिति। द्रष्टा दर्शनं दृश्यं एतानि त्रीण्यपि वास
नया सह त्यक्त्वा दर्शनं प्रथममाभासं तं प्रकाशं तेन तादृशमात्मानं वयमुपास्महे ६ द्वयोरिति। अस्ति नास्तीति

यो·वा· सूर्यादीनांप्रकाशकंआत्मानंसमुपास्महे ॥ यआदित्यस्तपतीतिश्रुतेः ७ निद्रेति । जाग्रदवस्थांतेनिद्रारंभे प्र·१०
सा· योभावउपजायतेतंभावंभावयन्अक्षयमानंदंसदाश्नुते ८ प्रशांतेति । प्रशांताःसर्वेसंकल्पाःयस्याःईदृशीशि
२४ लावत्निर्व्यापाराजाग्रन्निद्राहीनायास्थितिःसास्वरूपस्थितिः ९ जडतामिति । जडतावर्जनेनयाशिलावदव

प्रकाशनंप्रकाशानामात्मानंसमुपास्महे ७ निद्रादौजागरस्यांतेयोभावउपजायते तंभावंभा
वयन्साक्षादक्षयानंदमश्नुते ८ प्रशांतसर्वसंकल्पायाशिलावदवस्थितिः जाग्रन्निद्रावि
निर्मुक्तासास्वरूपस्थितिःपरा ९ जडतांवर्जयित्वैकांशिलायाहृदयंचयत् अमनस्कम
हाबाहोतन्मयोभवसर्वदा १० सत्यानंदचिदाकाशस्वरूपःपरमेश्वरः मृद्भाजनेषुमृदिव
सर्वत्रास्त्यपृथक्स्थितिः ११ अपारावारविस्ताराःस्वविस्सलिलवल्गनैः चिदेकार्णवएको ऽयंस्वयमात्मा विजृंभते १२॥

स्थितिःहेमहाबाहोरघुनाथमनोव्यापारहीनासर्वदातन्मयोभव १० सत्येति । सत्यःआ राम
नंदःचिद्रूपःआकाशतुल्यःपरमेश्वरःसर्वत्रअस्तिअपृथक्स्थितिरस्ति । मृत्पात्रेमृत्तिकावत् ११ अपारेति । न २४
विद्यतेपारावारंपरावर्वाचीनतीरेयस्यास्तादृशीविस्तारायासंवित्तदेवसलिलंतद्वल्गनैश्चिदेकार्णवएवा यमेकआत्माविजृंभतेप्रकाशते १२॥

भरितेति। भरिता व्याप्ता अशेषा दिशः कुंजाश्च येन ईदृशं अनंतं आकाशवत् निर्भरं व्यापकं चिन्मात्रं एकं सजाती
यविजातीयभेदरहितं वस्त्वेव जगत्। यथांबुधिः वाः जलमेव १३ निरंशेति। निरंशत्वान्निरवयवत्वाद्विभुत्वाद्व्या
पकत्वात् अनश्वरत्वाच्च एतेन ब्रह्मणो वस्तुनश्च नास्ति भेदः परंतु ब्रह्मणः चैतन्यमधिकं न वस्तु जडमित्यर्थः १४

भरिताशेषदिक्कुंजमनंताकाशनिर्भरं एवं वस्तु जगत्सर्वं चिन्मात्रं वारिवांबुधिः १३ निरंश
त्वाद्विभुत्वाच्च तथानश्वरभावतः ब्रह्मणोस्मान्न भेदोस्ति चैतन्यं ब्रह्मणोधिकं १४ पुराणांत
रेपि सुखस्य दुःखस्य न कोपि दाता परो ददातीति कुबुद्धिरेषा अहं करोमीति वृथाभिमानः
कर्मास्वसूत्रग्रथितो हि लोकः १ यस्याभिमानमोक्षेपि देहेभिममता तथा न वा ज्ञानी नैव यो
गी केवलं दुःखभागसौ २ हरो यद्युपदेष्टा ते हरिः कमलजोपि वा तथापि न तव स्वास्थ्यं सर्व
विस्मरणादृते इति ३॥ निस्तरंगोतिगंभीरः सांद्रानंदसुधार्णवः माधुर्यैकरसाधार एक एवास्ति
सर्वतः १५ समस्तं खल्विदं ब्रह्म सर्वमात्मेदमागतं॥ ११ निस्तरंग इति। ईदृश आत्मा एक एव सर्वतोस्ति

कीदृशः निस्तरंगः स्थिरः अत्यंतगभीरः। सांद्रानंद एव सुधा तस्या अर्णवः। माधुर्यमानंद एवैकरसस्तदाश्रयः १५

यो·वा· इदंदृश्यंजगत्समस्तंब्रह्मैवात्मैवततोहमन्यदिदंजगच्चान्यदित्यखंडंब्रह्मस्वरूपंमाखंडय १६ यदे

सा· वेति।ततंव्याप्तंअखंडितंब्रह्मणोरूपंयदेवबुद्धंतदेवविस्तीर्णःसंसारःपरमेश्वरतांगतोभवति।ब्रह्मैवभा

२५ तीत्यर्थः १७ समस्तमिति।सर्वंब्रह्मेतिभावितप्रुमान्ब्रह्मैवभवेत्।यथाअमृतेपीतेसतिकोनामपुरुषःअ

मृतमयोनभवेत् १८ भव्यइति।यदित्वंभव्योसिब्रह्माहमस्मिब्रह्मनिश्चयात्सर्वंमाप्नोषि।नोचेद्बद्धएवुक्तं

अहमन्यदिदंचान्यदित्यखंडंनखंडय १६ यदेवब्रह्मणोरूपंततंबुद्धमखंडितं तदाविस्ती

र्णःसंसारःपरमेश्वरतांगतः १७ समस्तमेवब्रह्मेतिभावितेब्रह्मवैप्रुमान् पीतेमृतेऽमृतम

यःकोनामनभवेदिति १८ भव्योसिचेत्तदेतस्मात्सर्वमाप्नोषिनिश्चयात् नोचेद्बद्धपिसंप्रोक्त

त्वयिभस्मनिहूयते १९ अपिविज्ञाततत्त्वेनतथाभ्यस्यमिदंसदा ननाममात्रात्कतकफलमं

बुप्रसादकं २० अहमेवपरंब्रह्मवासुदेवाख्यमव्ययं इतिस्यान्निश्चितोमुक्तोबद्धएवान्यथा

भवेत् २१॥ १९ भस्मनिहोमवन्निष्फलंएवत्वयैव १९ अपीति।विज्ञाततत्त्वेनापिइदमेवसदाभ्यस्यंअहंब्रह्मा

स्मीति॥तत्रदृष्टांतमाह॥कतकफलंनाममात्रेगृहीतेसतिजलप्रसादकंनभवति २० अहमिति।वासुदेवाख्यपरंब्र

प्र· ९०

ह्माहमेवेतिनिश्चितःमुक्तः॥नर
२५ राम भावेबद्धएवनरः॥२१॥

नेतिनेतीति।नेतीत्यादिकावह्नात्निषेधपदवधिभूतंतदहमस्मीतिज्ञात्वासुखीभव २२ आत्मानमिति।नि
रंतरंब्रह्मैवात्मानंजानीहि।अखंडंब्रह्मध्यातृध्येयभावेननकथंखंडयसि २३ सोहमिति।चिन्मात्रंब्रह्माहम
स्मीतिस्मरणंध्यानंतस्याविस्मरणंसमाधिः २४ ब्रह्माकारेति।ज्ञानाभ्यासातिशयेनअहंकारंविनायोब्रह्मा

नेतिनेतीतिनेतीतिशेषितंयत्परंपदं निराकर्तुमशक्यत्वात्तदस्मीतिसुखीभव २२ शास्त्रांत
रेपि आचक्ष्वशृणुवातातनानाशास्त्राण्यनेकशः तथापिनतवनस्वास्थ्यंसर्वविस्मरणादृते १
आत्मानंसततंब्रह्मविद्धिचैकंनिरंतरं अहंध्यातापरंध्येयमखंडंखंडसेकथं २३ सोहंचिन्मा
त्रमेवेतिचिंतनंध्यानमुच्यते ध्यानस्याविस्मृतिःसम्यक्समाधिरभिधीयते २४ ब्रह्माकारम
नोवृत्तिःप्रवाहोहंकृतिंविना संप्रज्ञातसमाधिःस्यात्ज्ञानाभ्यासप्रकर्षतः २५ कल्पांतवायवो
यांतुयांतुचैकत्वमर्णवाः तपंतुद्वादशादित्यानास्तिनिर्मनसःक्षतिः २६ याचितिःसर्वभूतानाम
दयव्ययसाक्षिणी ॥ २७

कारमनोवृत्तिप्रवाहःसएवसंप्रज्ञातसमाधिः २५ कल्पांतेति।कल्पांतवायुषुप्रवहत्सुसमुद्रेष्वेकत्वंगतेषुद्वा
दशादित्येषुतपत्स्वपिनिर्मनसोब्रह्मविदःक्षतिर्नास्तिकृतिर्नास्तीत्यर्थः २६ याचितिरिति।सर्वभूतानामुत्पत्तिना
शसाक्षिभूतायाचितिः॥

यो॰ वा॰ सा॰ २६

पूर्णानंदरूपमासां तां चितिरूपामवस्थां पश्यन्‌ विचारयन्‌ २७ मनइति। सचराचरं यत्किंचिज्जगत्‌ तन्मनो
मात्रविलसितं तन्मनस उन्मनीभावात्‌ द्वैतं नास्त्येव २८ यदिति। यत्‌ अस्पंदं निष्कंपं शिवं शांतं तन्मध्ये विश्व
स्य स्थितिः। चराचरविलासरूपश्चिदात्मा त्र स ए — व एक एव २९ अहीति। अहिः सर्पः स हि निर्ल्वयनीं स्व
कंचुकं मोचनात्‌ पुरा प्रथमं आत्मतया स्वीयत्वेन जगृहे। उरगः सर्पस्तां बिले त्यक्त्वा पुनरात्मत्वेन नावलोकते

तां चितिं पश्यतावस्थां पूर्णानंदघनामृतां २७ मनोदृश्यमिदं सर्वं यत्किंचित्सचराचरं मनसो
ह्युन्मनीभावात्‌ द्वैतं नैवोपलभ्यते २८ यदस्पंदं शिवं शांतं यस्यांतर्जगतः स्थितिः स्पंदास्पंदविला
सात्मा स एकोत्र चिदाकृतिः २९ अहिर्निर्ल्वयनीमहिरात्मतया जगृहे परिमोक्षणतस्तु पुरा परि
मुच्य तु तामुरगः स्वबिले न निरीक्षत आत्मतया तु पुनः ३० दोषबुध्या भयातीतो निषेधान्न नि
वर्तते गुणबुध्या च विहितं न करोति यथार्भकः ३१ ॥ इयमहमिति न वेत्ति तथा ज्ञानी देहमिति भावः ॥ ३०

दोषेति। उभयातीतो गुणदोषहीनो ब्रह्मस्वभावत एव निषेधात्‌ पापचरणान्निवर्तते। न तु दोषबुध्या इदं पापं म
यानकार्यमिति बुध्या तु न निवर्तते। किंच ज्ञानी विहितं स्नानसंध्यादिकं च करोत्येव न तु गुणबुध्या इदं मयावश्यकं

प्र॰ १० इति तु न करोति स्वभावतो ज्ञानी विहितं
२७ राम करोति निषिद्धाच्च निवर्तते

ईदृशोज्ञानस्वभावइत्यर्थः ३१ अनुत्कीर्णेति।यथाअनुत्कीर्णाअलिखितापिशालभंजिकापुत्तलीस्तंभेस्थि
तैव।असंतींकथंलिखेत्॥तथाविश्वमविद्यमानमपिब्रह्मणिस्थितंतेनविश्वेनहीनंतत्पदंब्रह्मपदंनास्ति ३२
यथेति।एकएवार्थः ३३ सौम्येति।सौम्येस्थिरेजलेयथावीचिरस्तिनास्तिचतथेदंजगत्ब्रह्मणिअस्तिनास्ति

अनुत्कीर्णायथास्तंभेसंस्थिताशालभंजिका तथाविश्वंस्थितंतत्रतेनशून्यंनतत्पदं ३२ य
थानुपुत्रिकाशून्यः स्तंभोऽनुत्कीर्णपुत्रिकः तथाभातंजगद्ब्रह्मतेनशून्यपदंगतं ३३ सौम्यां
भसियथावीचिर्नचास्तिनचनास्तिच तथाजगद्ब्रह्मणीदंशून्याशून्यपदंगतं ३४॥ ६ ॥
॥ ॥इतिश्रीलघुयोगवासिष्ठसारेनिर्वाणप्रकरणंदशमं॥ ॥इतिश्रीयोगवासिष्ठसारविव
रणेमहीधरकृतेशून्याशून्यपदंगतंनामदशमंप्रकरणंसंपूर्णं॥ ११ च॥अज्ञानदशायामस्तिज्ञानदशा

यांनास्तीत्यर्थः॥तेनेदंब्रह्मशून्याशून्यंपदंगतंजगताहीनंसहितंचेत्यर्थः॥व्यावहारिकतात्त्विकदृशा व्यामित्य
र्थः॥ ३४॥ ॥इतिश्रीलघुयोगवासिष्ठसारेनिर्वाणप्रकरणटीकायांदशमं॥ ६ ॥ ६ ॥ ६ ॥ ६
॥ यो॰सा॰ ॥इतिश्रीयोगवासिष्ठसारविवरणेमहीधरकृतेशून्याशून्यंनामटीकायांदशमंप्रकरणं॥

वाराणसीप्रसादस्यनियोगेनप्रयत्नतः। काशीसंस्कृतमुद्रायामंकि
तोयंशिलाक्षरैः॥ १॥ श्रीकाशीजीमेमहल्लेहौदकटोरा श्रीयुतबाबूवा
राणसीप्रसादजीकेमकानमें काशीसंस्कृतमुद्रायंत्रमेछपी जिने

इतिसटीकयोगवासिष्ठसारंसमाप्तम् ॥ ८ ॥

कोलेनाहोयउन्कोउक्तस्थानमेश्रीबाबूवाराणसीप्रसादजीकेपास
याकचौरीगलीमें भाईप्रतापसिंहजीकेदुकानपरमिलेगी॥ ॥

संवत् १९५१ ॥